(नेपथ्ये)

इदो इदो सहिओ ।    इत इतः सख्यौ ।

**राजा**—(कर्णं दत्त्वा ।) अये, दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते । यावदत्र गच्छामि । (परिक्रम्यावलोक्य च ।) अये, एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते । (निपुणं निरूप्य) अहो, मधुरमासां दर्शनम् ।

**शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।**
**दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ १५ ॥**

यावदिमां छायामाश्रित्य प्रतिपालयामि । (इति विलोकयन्स्थितः ।)

---

द्वेषरहितम् आश्रमपदं आश्रमस्थानम् । अनेनाश्रमस्था लक्ष्यन्ते । स्फुरति स्पन्दते । अस्य स्फुरणस्य फलं प्रियालिङ्गनरूपम् । कुतः । कस्मात् भवति । आश्रमस्य शान्तत्वान्न संभवतीत्यर्थः । अथवेति पक्षान्तरे । भवितव्यानां प्राप्तव्यानामर्थानाम् । भू प्राप्तावित्यस्माद्धातोरिदं रूपम् । सर्वत्र सर्वेषु देशेषु भवन्ति जायन्ते । इत इतः सख्यौ । आगच्छतमिति शेषः । प्राकृते द्विवचनस्य बहुवचनमित्युक्तत्वात् । **कर्णं दत्त्वेत्यादि** ॥ आकर्णनावहितो भूत्वेत्यर्थः । अये इति वाक्यालंकारे । वृक्षवाटिकां दक्षिणेन वृक्षवाटिकादक्षिणभागे । 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इत्येनप्प्रत्ययः । 'एनपा द्वितीया' इति द्वितीया । **एता इति** ॥ स्वप्रमाणानुरूपैः आत्मशक्तिसदृशैः सेचनघटैः वृक्षसेचनार्थकलशैः । मधुरं स्वभावसुन्दरं दर्शनं दृश्यत इति दर्शनं रूपम् । **शुद्धान्तेत्यादि** ॥ आश्रमवासिनो यतिजनस्य परिव्राड्जनस्य इदं वपुः शरीरम् । वपुःशब्देन तद्गतसौकुमार्यादयो लक्ष्यन्ते । शुद्धान्तेन अन्तःपुरेण दुर्लभमलभ्यम् । उद्यानलता वनलताभिः गुणैः सौकुमार्यादिभिः दूरीकृताः निरस्ताः । संस्कारवतीभ्यः उपवनलताभ्यः संस्कारविहीनानां वनलतानां

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ।)

**शकुन्तला**—इदो इदो सहीओ । इत इतः सख्यौ ।

**अनसूया**—हला सउन्दले, तुवत्तो वि तादकस्सवस्स अस्समरुक्खआ पिअदरेत्ति तक्केमि । जं इमिणा णोमालिआकुसुमपेसला तुमं वि एदाणं आलवालसेअणे णिउत्ता ।

हला शकुन्तले, त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षाः प्रियतरा इति तर्कयामि । यदनेन नवमालिकाकुसुमपेशला त्वमप्येतेषामालवालसेचने नियुक्ता ।

**शकुन्तला**—ण केअलं तादणिओओ । अत्थि मे सोदरसिणेहो एदेसु ।

न केवलं तातनियोगः । अस्ति मे सोदरस्नेह एतेषु ।

(इति वृक्षसेचनं रूपयति ।)

**राजा**—(आत्मगतं) कथमियं सा कण्वदुहिता । असाधुदर्शी खलु तत्रभवान्काश्यपः, य इमामाश्रमधर्मे नियुङ्क्ते ।

---

गुणाधिक्यं प्रायशो विद्यत इति भावः । प्रतिपालयामि प्रतीक्षे । यथोक्तव्यापारा पूर्वोक्तकर्मप्रवृत्ता । इत इतः सख्यौ । सखि शकुन्तले त्वत्तोऽपि तातकाश्यपस्य आश्रमवृक्षाः प्रियतरा इति तर्कयामि । यदनेन नवमालिकाकुसुमपेशलापि त्वमेव तेषामालवालसेचने नियुक्ता । हला इति सख्यामन्त्रणे । 'वा सख्यामामि हलाहले' इति निपातनात् । न केवलं तातनियोगः, ममापि खलु सोदरस्नेह एतेषु । निरूपयति अभिनयति । **कथमियमिति** ॥ सा पूर्वं वैखानसोक्ता । कथमिति वाक्यालंकारभूते प्रश्नविशेषे । असाधुदर्शी साधु न पश्यतीति असाधुदर्शी । **यदिमामित्यादि** ॥ यत् यस्मात् आश्रमधर्मे नियुङ्क्ते तस्मादसाधुदर्शी । तदेवोपपादयति—**इदं किलेति** ॥ अव्याजमनोहरं अनिमित्तसुन्दरम् । भूषणादिराहित्येऽपि रमणीयमित्यर्थः । तपःक्षमं मुनिव्रतसहं साधयितुं निर्वर्तयितुं य इच्छति वाञ्छति । स मुनिः नीलोत्पलपत्रधारया समिल्लतां छेत्तुं व्यवस्यति ।

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥ १६ ॥

भवतु । पादपान्तर्हित एव विस्रब्धं तावदेनां पश्यामि ।

(इति तथा करोति ।)

**शकुन्तला**—अणसूए, अदअपिणद्धेण थणवक्कलेण पिअंवदाए णिअन्तिद म्हि । सिढिलेहि दाव णं ।

अनसूये, अदयपिनद्धेन स्तनवल्कलेन प्रियंवदया नियन्त्रितास्मि । शिथिलय तावदेतत् ।

**अनसूया**—तह । तथा । (इति शिथिलयति ।)

**प्रियंवदा**—(सहासम् ।) एत्थ दाव पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवालह ।

अत्र तावत्पयोधरविस्तारयितृकमात्मनो यौवनमुपालभस्व ।

---

ध्रुवमित्युत्प्रेक्षा । **भवत्विति** ॥ स यादृशस्तादृशोऽस्त्वित्यर्थः । पादपैः अन्तरितः व्यवहितः । विस्रब्धं स्वैरं एनां शकुन्तलां पश्यामि । अत्रैतां विस्रब्धं पश्यामीत्यनेन गम्यमानः शकुन्तलागोचरः दुष्यन्तस्याभिलाषः अस्मिन्नाटके बीजमिति मन्तव्यम् । 'स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा' इत्युक्तत्वात् । अत्रायमभिलाषो दशानामवस्थानां प्रथमावस्थेति मन्तव्यम् । 'अभिलाषः स्पृहा रम्ये दृष्टे वालम्बने श्रुते । औत्सुक्यस्वेदरोमाञ्चहर्षविस्मयसाध्वसैः॥ चापलस्तम्भलज्जाद्यैरनुभावैः स बोध्यते ॥' इति । अनसूये अदयपिनद्धेन स्तनवल्कलेन प्रियंवदया नियन्त्रितास्मि । शिथिलय तावदिमम् । अत्र तावत् पयोधरविस्तारयितृकमात्मनो यौवनमुपालभस्व । वल्कलस्य बन्धनदार्ढ्यं न मया कृतम् किंतु यौवनकृतमित्यभिप्रायः । **काममित्यादि** ॥ कामम्

**राजा**—काममननुरूपमस्या वयसो वल्कलं न पुनरलंकारश्रियं न पुष्यति । कुतः ।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १७ ॥

**शकुन्तला**—(अग्रतोऽवलोक्य ।) एसो वादेरिदपल्लवङ्गुलीहिं तुवरेदि विअ मं केसररुक्खओ । जाव णं संभावेमि ।

एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः । यावदेनं संभावयामि ।

(इति परिक्रामति ।)

**प्रियंवदा**—हला सउन्दले, एत्थ एव्व दाव मुहुत्तअं चिट्ठ । जाव तुए उवगदाए लदासणाहो विअ अअं केसररुक्खओ पडिभादि ।

हला शकुन्तले, अत्रैव तावन्मुहूर्तं तिष्ठ, यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति ।

---

अत्यर्थम् अननुरूपम् असदृशम् अलंकारश्रियं पुनः अलंकारलक्ष्मीं तु न पुष्यतीति न, पुष्यत्येवेत्यर्थः । कुत इति प्रश्ने । **सरसिजमिति** ॥ शैवलेन अनुविद्धं अनुषक्तमपि रम्यम् । मधुराणां स्वभावरम्याणाम् आकृतीनां रूपाणाम् । आकृतिशब्देन आकृतिमन्तो लक्ष्यन्ते । मुख्यार्थबाधस्य विद्यमानत्वात् । किमिव न मण्डनं, किं वा न ह्यलंकारः । सर्वमप्यलङ्कारो भवतीत्यर्थः ॥ एष वातेरितपल्लवाङ्गुलीभिः त्वरयति मां केसरवृक्षः । यवादिमं संभावयामि । **सखि शकुन्तले इति** ॥ अत्रैव तावन्मुहूर्तं तिष्ठ यावत् त्वया उपगतया लतासनाथ इवायं केसरवृक्षो मे प्रतिभाति । अतः

**शकुन्तला**—अदो क्खु सि पिअंवदा । अतः खल्वसि प्रियंवदा ।

**राजा**—न पुनः प्रियंवदा; प्रियमपि तथ्यमाह । अस्याः खलु,

**अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।**
**कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १८ ॥**

**अनसूया**—हला सउन्दले, इअं सअंवरवहू सहआरस्स तुए किदणामहेआ वणजोसिणित्ति णोमालिआ । णं विसुमरिदासि ।

हला शकुन्तले, इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका । एनां विस्मृतासि ।

**शकुन्तला**—जइ अत्ताणं वि विसुमरिस्सं । (लतामुपेत्यावलोक्य च) हला, रमणीए क्खु काले इमस्स लदापाअवमिहुणस्स वइअरो संवुत्तो । जं णवकुसुमजोव्वणा वणजोसिणी, सिणिद्धपल्लवदाए उवभोअक्खमो सहआरो । (इति पश्यन्ती तिष्ठति ।)

यद्यात्मानमपि विस्मरिष्यामि । (लतामुपेत्यावलोक्य च) हला, रमणीये खलु काले अस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः ।

---

खल्वसि प्रियंवदा । अस्याः खल्वित्यादि ॥ किसलयरागः किसलयस्य राग इव रागो यस्य स तथोक्तः । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च' इति समासः । लोभनीयं स्पृहणीयम् । संनद्धं मग्नं सर्वतो व्याप्तमित्यर्थः । अत्र लोभनीयमित्यनेन औत्सुक्यस्य गम्यमानत्वादारम्भो नाम प्रथमावस्था निवेशितेति मन्तव्यम् । 'आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः । औत्सुक्यमात्रमारम्भः फललाभाय भूयसे ॥' अत्र बीजारम्भयोः समन्वयान्मुखसंधिरिति मन्तव्यम् । तस्याङ्गान्यप्यत्रैव दर्शयिष्यामः । सखि शकुन्तले इयं स्वयंवरवधूः सहकारस्य त्वया कृतनमाधेया वनज्योत्स्नीति नवमालिका । जोसिणीति ज्योत्स्नाशब्दस्य देश्यां रूपम् । इमां विस्मृतासि । तथा यद्यात्मानमपि विस्मरिष्यामि । सखि रमणीये खलु काले अस्य लतापादप-

यत् नवकुसुमयौवना वनज्योत्स्ना, स्निग्धपल्लवतयोपभोगक्षमः सहकारः । (इति पश्यन्ती तिष्ठति ।)

**प्रियंवदा**—अणसूए, जाणासि किं सउन्दला वणजोसिणीं अदिमेत्तं पेक्खदित्ति ।

अनसूये, जानासि किं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यतीति ।

**अनसूया**—ण क्खु विभावेमि । कहेहि ।

न खलु विभावयामि । कथय ।

**प्रियंवदा**—जह वणजोसिणी अणुरूवेण पाअवेण संगदा, अवि णाम एव्वं अहं वि अत्तणो अणुरूवं वरं लहेअं त्ति ।

यथा वनज्योत्स्नानुरूपेण पादपेन संगता, अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति ।

**शकुन्तला**—एसो णूणं तुह अत्तगदो मणोरहो ।

एष नूनं तवात्मगतो मनोरथः ।

(इति कलशमावर्जयति ।)

**राजा**—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् । अथवा

**असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।**
**सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥**

---

मिथुनस्य व्यतिकरः संवृत्तः । यतो नवकुसुमयौवना ज्योत्स्नी अनुरूपेण पादपेन संगता एवं नामाहमपि आत्मनोऽनुरूपं वरं लभेयेति । एष नूनं तवात्मगतो मनोरथः । **अपि नामेति** ॥ कुलपतेः कण्वस्येयं शकुन्तला असवर्णक्षेत्रजा स्यात् असमानजातीयकलत्रसंभवा । असवर्णेत्यत्र 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु' इति समानशब्दस्य सभावः । अपि स्यान्नाम भवेत्किम् । अपिः प्रश्ने । नामेति वाक्यालंकारे । अथवेति पक्षान्तरे । **असंशयमिति** ॥ क्षत्रपरिग्रहक्षमा क्षत्रियस्वीकरणयोग्या । यत् यस्मात् । आर्यं साधु निर्दोषमित्यर्थः । मे मनः अस्यां शकुन्तलायाम् अभिलाषि सस्पृ-

तथापि तत्त्वत एनामुपलप्स्ये ।

**शकुन्तला**—(ससंभ्रमं) अम्मो । सलिलसेअणसंभंतो णे
लिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ ।

(ससंभ्रमं) अहो । सलिलसेचनसंभ्रान्तो नवमालिकामुज्झि
वदनं मे मधुकरोऽभिवर्तते ।

(इति भ्रमरबाधां रूपयति ।)

**राजा**—(सस्पृहं)

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ २८

हम् । सतां सज्जनानां संदेहपदेषु वस्तुषु अन्तःकरणप्रवृत्तयः मनोव्य
प्रमाणं साधनम् । अत्र शकुन्तलागतस्य दुष्यन्ताभिलाषरूपबीजस्य विन
दुपक्षेपो नाम मुखसंधेः प्रथमाङ्गम् । उक्तं च—'बीजन्यास उपक्षेपः'
तथाप्यनुमानेन निश्चितं यद्यपि तत्त्वत एनामुपलप्स्ये ज्ञास्ये ।
उपलप्स्य इत्यत्र आत्मप्रत्यये असंतुष्टः परप्रत्ययमपेक्षत इति भावः । स
सेचनसंभ्रान्तः नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते । अ
इत्यत्र तस्याधूर्ताद्दृ इति तस्य टत्वम् । रूपयति अभिनयति । **चला**
**मिति** ॥ चलौ अपाङ्गौ यस्मिन्कर्मणि तत्तथोक्तं, वेपथुमतीम् । रहि
रहस्यं वचनमिति शेषः । तदाख्यातीति रहस्याख्यायी इव मृदु यथ
स्वनसि । धून्वत्याः विक्षिपन्त्याः । रतिसर्वस्वमधरं संभोगसर्वधनसदृशमि
तत्त्वान्वेषात् जातिनिश्चयपरामर्शात् । वयं हता वञ्चिता इत्यर्थः । त्वं
कृतार्थः खलु । तत्र तत्त्वान्वेषाद्वयं हता इति बीजस्य बहुलीकरणात्प
नाम संध्यङ्गमुक्तं भवति । 'तद्बाहुल्यं परिक्रिया' इति । सख्यौ परि

**शकुन्तला**—हला, परित्ताअह परित्ताअह मं इमिणा दुव्विणीदेण महुअरेण पडिहूअमाणं ।

हला, परित्रायेथां परित्रायेथां मामनेन दुर्विनीतेन मधुकरेण परिभूयमानाम् ।

**उभे**—(सस्मितं) का वअं परित्तादुं । दुस्सन्दं अक्कन्द । राअरक्खिदाइ तवोवणाइ णाम ।

(सस्मितं) के आवां परित्रातुम् । दुष्यन्तमाक्रन्द । राजरक्षितानि तपोवनानि नाम ॥

**राजा**—अवसरोऽयमात्मानं प्रकाशयितुम् । कः कोऽत्र भोः । (इत्यर्धोक्ते स्वगतं) राजभावस्त्वभिज्ञातो भवेत् । भवतु । एवं तावदभिधास्ये ।

**शकुन्तला**—ण एसो दुट्ठो विरमदि । ता अण्णदो गमिस्सं । (पदान्तरे स्थित्वा सदृष्टिक्षेपं) कहं इदोवि मं अणुसरदि ।

नैष दुष्टो विरमति । तस्मादन्यतो गमिष्यामि । (पदान्तरे स्थित्वा सदृष्टिक्षेपं) कथमितोऽपि मामनुसरति ।

**राजा**—(सत्वरमुपसृत्य)

**कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।**
**अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ २१ ॥**

---

परित्रायेथामिमामनेन दुर्विनीतेन परिभूयमानाम् । अत्र द्विरुक्तिः संभ्रमकृता । का वयं परित्रातुम् । दुष्यन्तमाक्रन्द । राजरक्षणीयानि तपोवनानि नाम । किंतु राजभावो विज्ञातो भवेदित्यत्र आशङ्कायां काकुरनुसंधेया । भवतु यथा तथा वास्तु । एवमभिधास्ये इत्थं वक्ष्यामि । वक्ष्यमाणप्रकारेण राजभावं प्रच्छादयामीत्यर्थः । नैष दुष्टो विरमति । तस्मादन्यतो गच्छामि । सदृष्टिक्षेपं क्रियाविशेषणम् । कथमितोऽपि मामनुसरति । **कः पौरव इति** ॥ दुष्यन्ते

(सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः।)

**अनसूया**—अज्ज, ण क्खु किंचि अच्चाहिदं। इअं णो पिअसही महुअरेण आकुलीकिअमाणा कादरीभूदा।

आर्य, न खलु किंचिदत्याहितम्। इयं नौ प्रियसखी मधुकरेणाकुलीक्रियमाणा कातरीभूता।

(इति शकुन्तलां दर्शयति।)

**राजा**—(शकुन्तलाभिमुखो भूत्वा) अपि तपो वर्धते?

(शकुन्तला साध्वसादवचना तिष्ठति।)

**अनसूया**—दाणिं अदिहिविसेसलाहेण। साअदं अज्जस्स। हला सउन्दले, गच्छ उडअं। फलमिस्सं अग्घं उवहर। इदं पादोदअं भविस्सदि।

इदानीमतिथिविशेषलाभेन। स्वागतमार्याय। हला शकुन्तले, गच्छोटजम्। फलमिश्रमर्घ्यमुपहर। इदं पादोदकं भविष्यति।

**राजा**—भवतु; भवतीनां सूनृतयैव गिरा कृतमातिथ्यम्।

**प्रियंवदा**—तेण हि इमस्सिं दाव पच्छाअसीअलाए सत्तवण्णवेदिआए अज्जो उवविसिअ परिस्समविणोदं करेदु।

---

दुर्विनीतानां शासितरि नियामके। कोऽयमाचरति करोति। अविनयं अपचारं। मुग्धासु अप्रगल्भासु। पौरवे शासितरीत्येतद्वचनं राजराजकीययोः साधारणं सत् तद्राजभावे संदेहजनकत्वेन राज्ञः प्रच्छादनरूपं चातुर्यं प्रकटयतीत्यवगन्तव्यम्। किंचिदिव, इवशब्दो वाक्यालंकारे। आर्य न खलु किंचिदत्याहितं महाभीतिः। इयं नौ सखी मधुकरेणाकुलीक्रियमाणा कातरीभूता। अपि तपो वर्धते। अपिः प्रश्ने। इदानीमतिथिविशेषलाभेन। तपो वर्धत इत्यनुसंधेयम्। स्वागतमार्याय। सखि शकुन्तले गच्छोटजम्। फलमिश्रमर्घ्यमुपाहर। इदं पादोदकं भविष्यति। भवतीति॥ भवच्छब्दस्य संबुद्धिः। सूनृतया प्रियसत्यया। 'सूनृतं प्रिये सत्ये' इत्यमरः। तेन ह्यस्यां तावत्प्रच्छायशीतलायां सप्तपर्णवेदिकायामार्य

तेन ह्यस्यां तावत्प्रच्छायशीतलायां सप्तपर्णवेदिकायामार्य उपविश्य परिश्रमविनोदं करोतु ।

**राजा**—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः ।

**अनसूया**—हला सउन्दले, उइदं णो पज्जुवासणं अदिहीणं । ता एत्थ उवविसम्ह ।

हला शकुन्तले, उचितं नः पर्युपासनमतिथीनाम् । तस्मादत्रोपविशामः ।

(इति सर्व उपविशन्ति ।)

**शकुन्तला**—(आत्मगतं) किं णु क्खु इमं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअम्हि संवुत्ता ।

(आत्मगतं) किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ।

**राजा**—(सर्वा विलोक्य) अहो समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

**प्रियंवदा**—(जनान्तिकं) अणसूए, को णु क्खु एसो चउरगम्भीराकिदी महुरं पिअं आलवन्तो पहवन्दो विअ दीसइ ।

---

उपविश्य परिश्रमविनोदं करोतु । अनेन कर्मणा वृक्षसेचनव्यापारेण । सखि शकुन्तले उचितं नः पर्युपासनमतिथीनाम् । तस्मादत्रोपविशामः । किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता । तत्र प्रतीयमानो दुष्यन्तगोचरः शकुन्तलाभिलाषः प्रथमावस्थेति मन्तव्यम् । अत्रात्मगतमित्येतत्पदमश्राव्यार्थप्रयोगे कविना प्रयुक्तम् । तथा चोक्तं—'अश्राव्यं नियतश्राव्यमीषच्छ्राव्यमिति त्रिधा । अश्राव्यमन्यैरज्ञातमात्मन्येव स्थितं विदुः ॥ तदात्मगतमित्युक्त्या नाट्यव्यङ्गचे निवेशयेत् ।' इति । सौहार्दं सुहृदो भावः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः । **जनान्तिकमिति** ॥ अनसूये को नु खल्वेष चतुरगम्भीराकृतिः मधुरमाल–

(जनान्तिकं) अनसूये, को नु खल्वेष चतुरगम्भीराकृतिः मधुरं [1]प्रियमालपन् प्रभवन्निव दृश्यते ।

**अनसूया**—सहि, मम वि अत्थि कोदूहलं । पुच्छिस्सं दाव णं । (प्रकाशं) अज्जस्स महुरालावजणिदो विस्सासो मं मन्तावेदि—कदमो अज्जेण राएसिवंसो अलंकरीअदि, कदमो वा विरहपज्जुस्सुअजणो किदो देसो, किंणिमित्तं वा सुउमारो वि तवोवणगमणपरिस्समस्स अत्ता पत्तदं उवणीदो ।

सखि, ममाप्यस्ति कौतूहलम् । प्रक्ष्यामि तावदेनम् । (प्रकाशं) आर्यस्य मधुरालापजनितो विश्वासो मां मन्त्रयते—कतम आर्येण राजर्षिवंशोऽलंक्रियते, कतमो वा विरहपर्युत्सुकजनः कृतो देशः, किंनिमित्तं वा सुकुमारोऽपि तपोवनगमनपरिश्रमस्यात्मा पात्रतामुपनीतः ।

**शकुन्तला**—(आत्मगतं) हिअअ, मा उत्तम्म । एसा तुए चिन्तिदं अणसूआ मन्तेदि ।

(आत्मगतं) हृदय, मा उत्ताम्य । एषा त्वया चिन्तितमनसूया मन्त्रयते ।

---

पन् प्रभवन्निव दृश्यते । सखि ममापि कौतूहलम् । पृच्छामि तावदिमम् । अत्र जनान्तिकमित्येतद्वचनं नियतश्राव्यार्थप्रयोगे कविना प्रयुक्तम् । 'अर्थस्त्वेकेन विज्ञेयो नियतश्राव्य इष्यते । द्विविधः स परिज्ञेयो जनान्तश्चापवारितम् । गुह्यो गुह्यतरश्चेति जनान्तो द्विविधो मतः । स्याज्जनान्तिकमित्युक्त्या वाच्यः पूर्वस्तथा परः ॥ कर्ण एवमिवेत्युक्त्वा ज्ञाप्यः पश्चात्स संगतः ।' इति । **प्रकाशमिति** ॥ आर्यस्य मधुरालापजनितो विश्वासो मामामन्त्रयते । कतम आर्येण राजर्षिवंशोऽलंक्रियते । कतमो वा विरहपर्युत्सुकजनः कृतो देशः । किंनिमित्तं वा सुकुमारोऽपि तपोवनगमनपरिश्रमस्य आत्मा पात्रतामुपनीतः । अत्र प्रकाशमित्येतद्वचनम् अश्राव्यनियतश्राव्यानन्तरं सर्वश्राव्यार्थप्रयोगे कविना प्रयुक्तम् । तदुक्तं—'सर्वैराकर्णनीयार्थः श्राव्य इत्यभिधीयते । एतं प्रकाशमित्युक्त्या तयोरन्ते प्रयोजयेत् ॥' इति । हृदय मा उत्ताम्य । यदेषा त्वया

**राजा**—(आत्मगतं) कथमिदानीमात्मानं निवेदयामि, कथं वात्मापहारं करोमि। भवतु। एवं तावदेनां वक्ष्ये। (प्रकाशं) भवति, यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः।

**अनसूया**—सणाहा दाणिं धम्मआरिणो।

सनाथा इदानीं धर्मचारिणः।

(शकुन्तला शृङ्गारलज्जां रूपयति।)

**सख्यौ**—(उभयोराकारं विदित्वा; जनान्तिकं)

हला सउन्दले, जइ एत्थ अज्ज तादो संणिहिदो भवे।

हला शकुन्तले, यद्यत्राद्य तातः संनिहितो भवेत्।

**शकुन्तला**—(सरोषं) तदो किं भवे।

(सरोषं) ततः किं भवेत्।

**सख्यौ**—इमं जीविदसव्वस्सेण अदिहिं किदत्थं करिस्सादि।

इमं जीवितसर्वस्वेनातिथिं कृतार्थं करिष्यति।

**शकुन्तला**—तुह्मे अवेध। किं वि हिअए करिअ मन्तेध। ण वो वअणं सुणिस्सं।

---

चिन्तितमनसूया मन्त्रयते। **कथमित्यादि**॥ उभयत्र कथमित्याक्षेपे। भवतीत्यामन्त्रणे। अविघ्नक्रियोपलम्भाय निर्विघ्नानुष्ठानज्ञानाय। धर्माधिकरणे नियुक्त इत्यनेन तासां दुष्यन्तेन नियुक्तः स्वपुरुष इति ज्ञापितं भवति। न चात्मापहारदोषः। सनाथा इदानीं धर्मचारिणः। शृङ्गारलज्जां निरूपयति शृङ्गारस्यानुभावरूपां लज्जामभिनयतीत्यर्थः। आकार इङ्गितम्। 'आकारस्त्विङ्ग इङ्गितम्' इत्यमरः। विदित्वा ज्ञात्वा। मुखभावाद्यनुभावैरिति शेषः। सखि शकुन्तले यद्यत्र तातः संनिहितो भवेत्। किं भवेत्। इमं जीवितसर्वस्वेन अतिथिं कृतार्थं करिष्यति। जीवितरूपं सर्वस्वमित्यनेन शकुन्तला द्योत्यते। अये

युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि । Listen

**राजा**—वयमपि तावद्भवत्योः सखीगतं किंचित्पृच्छामः ।

**सख्यौ**—अज्ज, अणुग्गहो क्खु अब्भत्थणा ।

आर्य, अनुग्रहः खल्वभ्यर्थना ।

**राजा**—भगवान्काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशः । इयं च वः सखी तदात्मजेति कथमेतत् ।

**अनसूया**—सुणादु अज्जो । अत्थि कोसिओत्ति किदगोत्तणामहेओ महाप्पहावो राएसी ।

श्रृणोत्वार्यः । अस्ति कौशिक इति कृतगोत्रनामधेयो महाप्रभावो राजर्षिः ।

**राजा**—अस्ति । श्रूयते ।

**अनसूया**—तं णो पिअसहीए पहवं अवगच्छ । उज्झिआए सरीरसंवड्ढणादिहिं तादकस्सवो से पिदा ।

---

किमपि हृदये कृत्वा मन्त्रयेथे । न वां वचनं श्रोष्यामि । वयमपि तावत् भवत्योः सखीगतं शकुन्तलागतं किंचित्किमपि विज्ञापितम् । अत्र शकुन्तलावृत्तान्तजिज्ञासया बीजस्य दृढीकरणात् परिन्यासो नाम संध्यङ्गमुक्तम् । 'तस्य दार्ढ्यं परिन्यासः' इति । आर्यानुग्रहः खल्वभ्यर्थना । **भगवानिति** ॥ माहात्म्यवान्, ब्रह्मणि ब्रह्मचर्ये स्थितः परिनिष्ठित इति । प्रकाशः प्रसिद्धः । **तदात्मजेति** ॥ पुत्रीति । अत्रात्मजशब्देन अद्भुतस्य गम्यमानत्वात्परिभाव इति संध्यङ्गमुक्तम् । 'परिभाव इति प्राहुरद्भुतार्थनिवेदनम्' इति । क्रमं विहाय व्युत्क्रमेण अङ्गकथनं कथमिति नाशङ्कनीयम् । 'यथोचितं प्रयोगः स्यादङ्गानां न क्रमो मतः ।' इत्युक्तेः । भगवान् काश्यप इत्यत्र कण्व इति वक्तव्ये काश्यपवचनं 'विप्रक्षत्रियनामानि कुर्याद्गोत्रानुसारतः' इत्युक्तेः । कौशिकः पौरव इत्यादिः । श्रृणोत्वार्यः । अस्ति कौशिक इति कृतगोत्रनामधेयो महाप्रभावो राजर्षिः ।

Source

तमावयोः प्रियसख्याः प्रभवमवगच्छ। उज्झितायाः शरीरसंवर्ध-
नादिभिस्तातकाश्यपोऽस्याः पिता।

Curiosity from the begin

**राजा**—उज्झितशब्देन जनितं मे कौतूहलम्। आ मूलाच्छ्रो-
तुमिच्छामि।

**अनसूया**—सुणादु अज्जो। पुरा किल तस्स राएसिणो उग्गे
तवसि वट्टमाणस्स किंवि जादसंकेहिं देवेहिं मेणआ णाम
अच्छरा पेसिदा णिअमविग्घकालिणी।

शृणोत्वार्यः। पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि
जातशङ्कैर्देवैर्मेनका नामाप्सराः प्रेषिता नियमविघ्नकारिणी।

**राजा**—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम्।

**अनसूया**—तदो वसन्तोदारसमए से उम्मादइत्तअं रूवं पेक्खिअ

ततो वसन्तोदारसमये तस्या उन्मादयितृकं रूपं प्रेक्ष्य—

(इत्यर्धोक्ते लज्जया विरमति।)

**राजा**—परस्तादवगम्यत एव। सर्वथाप्सरःसंभवैषा।

**अनसूया**—अह इं। अथ किम्।

**राजा**—उपपद्यते।

**मानुषीषु कथं वा स्यादस्य रूपस्य संभवः।**
**न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥ २२॥**

---

ततः नौ सख्याः प्रभवमवगच्छ। उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यप-
स्तस्याः पिता। शृणोत्वार्यः। पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य
किमपि जातशङ्कैर्देवैः मेनका नाम अप्सरा नियमविघ्नकारिणी प्रेषिता। ततो
वसन्तावतारसमये तस्या उन्मादयितृकं रूपं दृष्ट्वा इत्यनेन प्रकारेण अर्धोक्ते
अर्धस्योक्ते सति विरमति अवचना तिष्ठति। भवतु परस्तादवगम्यत एव।
'विभाषा परापराभ्याम्' इत्यस्तातिः। अथ किम्। 'अङ्गीकृतौ स्यादथकिम्'

(शकुन्तलाधोमुखी तिष्ठति ।)

**राजा**—(आत्मगतं) लब्धावकाशो मे मनोरथः । किंतु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः ।

**प्रियंवदा**—(सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा) पुणो वि वत्तुकामो विअ अज्जो । पुनरपि वक्तुकाम इवार्यः ।

(शकुन्तला सखीमङ्गुल्या तर्जयति ।)

**राजा**—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

**प्रियंवदा**—अलं विआरिअ । अणिअन्तणाणुओओ तवस्सिअणो णाम ।

अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम ।

**राजा**—इति सखीं ते ज्ञातुमिच्छामि ।

---

इत्यमरः । **उपपद्यत इति** ॥ प्रभातरलं ज्योतिर्विद्युदित्यर्थः । अत्र विलोभनं नाम संध्यङ्गमुक्तम् । 'गुणज्ञानाद्विलोभनम्' इति । **लब्धावकाश इति** ॥ अनेन 'यथा वनज्योत्स्न्यनुरूपेण पादपेन संगता, एवं नाम अहमप्यात्मनोऽनुरूपं वरं लभेय' इत्येतत्परामृश्यते । धृतो द्वैधीभावो येन तत् तथोक्तम् । पूर्वमस्यापरो निर्णीतो वा नवेति संशयोऽत्र द्वैधीभावः । द्वित्र्योश्च धमुञिति धमुञ् । लब्धावकाशो मे मनोरथ इत्यनेन धृतद्वैधीभावकातरं मे मन इत्यनेन च वाक्यद्वयेन सुखदुःखयोर्गम्यमानत्वाद्विधानं नाम संध्यङ्गमुक्तम् । 'सुखदुःखविधानं यद्विधानं परिकीर्तितम्' इति । किमपि पुनर्वक्तुकाम इव । आर्य अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम । अनियन्त्रणः अनियमः अनुयोगः प्रश्नः यस्मिन् स तथोक्तः । तपस्विनां रागद्वेषादेरभावात् पुनः पुनः पृच्छतीति कोपो नोत्पद्यत इति भावः । **इति सखीमित्यादि** ॥ इति वक्ष्यमाणप्रकारेण । वैखानसव्रतं आरण्यकानां व्रतम् ।

**वैखानसं किमनया व्रतमा प्रदाना-**
**द्व्यापाररोधि मदनस्य निषेवितव्यम् ।**
**अत्यन्तमेव मदिरेक्षणवल्लभाभि-**
**राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ २३ ॥**

**प्रियंवदा**—अज्ज, धम्माचरणे वि परवसो अअं जणो । गुरुणो उण से अणुरूववरप्पदाणे संकप्पो ।

आर्य, धर्माचरणेऽपि परवशोऽयं जनः । गुरोः पुनरस्या अनुरूपवर-प्रदाने संकल्पः ।

**राजा**—(आत्मगतं) न खलु दुरवापेयं प्रार्थना ।

**भव हृदय साभिलाषं संप्रति संदेहनिर्णयो जातः ।**
**आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २४ ॥**

**शकुन्तला**—(सरोषमिव) अणसूए, अहं गमिस्सं ।

---

वैखानसमित्यत्र—'मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः । वर्तयन्ति यथान्यायं वैखानसमताश्रिताः ॥' इत्युक्ता विवक्षिताः । आप्रदानात् यस्मै कस्मैचित् वराय प्रदानपर्यन्तमाविवाहमित्यर्थः । निषेवितव्यं किम् अनुष्ठातव्यं किम् । अत्यन्तमेव निरवधिकमेव यथा भवति तथा । मदिराणि मदनशीलानि ईक्षणानि तैर्हेतुभिः वल्लभाभिः प्रियाभिः । आहो इति पक्षान्तरे । निवत्स्यति नु स्थास्यति नु । 'सः स्यार्धधातुके' इति सकारस्य तकारः । आर्य धर्माचरणेऽपि परवशोऽयं जनः । पित्रधीन इत्यर्थः । वैखानसं किमनयेत्यादिना अनुरूपवरप्रदाने संकल्प इत्यन्तेन अनुरूपवरप्रदानरूपसंकल्परूपस्य गूढार्थस्य प्रकाशनादुद्भेदो नाम संध्यङ्गमुक्तम् । 'उद्भेदः स परिज्ञेयो यत्तु गूढार्थभेदनम् ।' इति । **न दुरवापेयमिति** ॥ दुरवापा दुर्लभा । प्रार्थना इच्छा । प्रार्थनाशब्देन तद्विषयो वरो लक्ष्यते । यद्वस्तु अग्निमाशङ्कसे विचारयसि तदिदं वस्तु स्पर्शक्षमं स्पर्श-योग्यं रत्नं माणिक्यं जातम् । अत्र युक्तिर्नाम संध्यङ्गमुक्तम् । 'युक्तिः संशयि-

(सरोषमिव) अनसूये, अहं गमिष्यामि ।

**अनसूया**—किंणिमित्तं ? किंनिमित्तम् ?

**शकुन्तला**—इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदेदुं ।

इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयितुम् ।

**अनसूया**—सहि, ण जुत्तं अकिदसक्कारं अदिहिविसेसं उज्झिअ अस्समवासिणो जणस्स सच्छन्ददो गमणं ।

सखि, न युक्तमकृतसत्कारमतिथिविशेषं उज्झित्वा आश्रमवासिनो जनस्य स्वच्छन्दतो गमनम् ।

(शकुन्तला न किंचिदुक्त्वा प्रस्थिता ।)

**राजा**—(आत्मगतं) आः कथं गच्छति । (गृहीतुमिच्छन्निगृह्यात्मानं) अहो चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि

**अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।**
**स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ २५ ॥**

**प्रियंवदा**—(शकुन्तलां निरुध्य) हला, ण दे जुत्तं गन्तुं ।

(शकुन्तलां निरुध्य) हला, न ते युक्तं गन्तुम् ।

**शकुन्तला**—(सभ्रूभङ्गं) किंणिमित्तं । किंनिमित्तम् ।

---

तार्थस्य निर्णयः परिकीर्तितः' इति । अनसूये अहं गमिष्यामि । किं निमित्तम् । इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयितुम् । गौतमी नाम काश्यपस्य भगिनी । सखि, न युक्तमकृतसत्कारमतिथिविशेषमुज्झित्वा आश्रमवासिनो जनस्य स्वच्छन्दतो गमनम् । **अहो चेष्टेत्यादि** ॥ अहो आश्चर्ये । चेष्टाया आङ्गिकक्रियायाः प्रतिरूपिका । कामिनां कामुकानां मनोवृत्तिः । एतदेवोपपादयति—**अहं हीत्यादिना** ॥ अनुयास्यन् अनुगमिष्यन् विनयेन सौशील्येन वारितप्रसरः निरुद्धगमनः । अनुच्चलन् अनुद्गच्छन् गत्वा पुनः प्रतिनिवृत्त इव ।

**प्रियंवदा**—रुक्खसेअणे दुवे धारेसि मे । एहि दाव । अत्ताणं मोचिअ तदो गमिस्ससि ।

वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि ।

(इति बलादेनां निवर्तयति ।

**राजा**—भद्रे, वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तथा ह्यस्याः

**स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-**
**दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।**
**बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं**
**बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥२६॥**

---

सखि न ते युक्तं गन्तुम् । किंनिमित्तम् । वृक्षसेचनिके मे द्वे धारयसि । एहि तावत् । अस्मादात्मानं मोचयित्वा ततो गमिष्यसि । मह्यं धारयसीत्यत्र 'धारेरुत्तमर्ण' इति संप्रदानसंज्ञा । बलादेनां निवर्तयतीत्यत्र वृक्षसेचनकारणकथन-व्याजेन बलात्सख्या कृतात् निवर्तनात् प्रोत्साहनाया गम्यमानत्वात् भेदो नाम संध्यङ्गमुक्तं भवति । 'भेदः प्रोत्साहना भवेत्' इति । **स्रस्तांसावित्यादि** ॥ स्रस्तांसा श्लथस्कंधा । घटोत्क्षेपणात् कलशोन्नयनात् अतिमात्रमत्यर्थं लोहिते तले ययोस्तौ तथोक्तौ । अद्यापि इदानीमपि । वृक्षसेचने चिरनिवृत्तेऽपीत्यर्थः । प्रमाणाधिकः स्वाभाविकमानादधिकः । कर्णशिरीषरोधि कर्णालंकारशिरीषसंश्लेषकारि घर्माम्भसां स्वेदजलानां जालकं वदने अभीक्ष्णमनुषक्तं न विरतमित्यर्थः । बन्धे केशबन्धे स्रंसिनि शिथिले सति । एकहस्तेन यमिताः बद्धाः । एकहस्तेन संयमनम् अन्यस्य घटसहितत्वादिति भावः । पर्याकुला मूर्धजाः कुन्तलाः । अत्र पूर्वं शकुन्तलायां प्रस्थितायां तद्गौरवप्रसङ्गे विच्छिन्ने सति तन्निवृत्तौ सत्यां पुनस्तत्प्रसङ्गस्य प्रवर्तनात् करणं नाम संध्यङ्गमुक्तम् । 'करणं प्रकृतारम्भ' इति ।

तदहमेनामनृणां करोमि । (इत्यङ्गुलीयं दातुमिच्छति ।)

(उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः ।)

**राजा**—अलमस्मानन्यथा संभाव्य । राज्ञः परिग्रहोऽयम् ।

**प्रियंवदा**—ण हि एदं अङ्गुलीअअं अङ्गुलीविओअं अज्जस्स अरिहदि । तुए वअणेण एव्व अणरिणा दाणिं एसा । (किंचिद्विहस्य) हला सउन्दले, मोइदासि अणुअम्पिणा अज्जेण, अहवा महाराएण । गच्छ दाणिं ।

नह्येतदङ्गुलीयकमङ्गुलीवियोगमार्यस्यार्हति । तव वचनेनैवानृणेदानीमेषा । (किंचिद्विहस्य) हला शकुन्तले, मोचितास्यनुकम्पिनार्येण, अथवा महाराजेन । गच्छेदानीम् ।

**शकुन्तला**—(आत्मगतं) जइ अत्तणो पहविस्सं । (प्रकाशं) का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा ।

---

अनृणां सेचनिकाद्रव्यरूपऋणरहितां करोमि । अङ्गुलीयकं दातुमिच्छति । ऊर्मिकां दातुमुद्युंक्ते । उभे सख्यौ नाममुद्राक्षराणि दुष्यन्तनामरूपाया मुद्राया अभिज्ञानस्याक्षराणि । अङ्गुलीयकस्थानीति शेषः । अनुवाच्य पठित्वा परस्परमालोकयतः । असौ राजेति मत्वा परस्परं वदत इत्यर्थः । परस्परावलोकनेन मामेते ज्ञातवत्याविति तयोरभिप्रायं ज्ञात्वा तत् प्रच्छादयति । **अलमिति** ॥ अस्मानन्यथा संभाव्य अलम् । राजेति न मन्तव्यम् । परिगृह्यते स्वीक्रियत इति परिग्रहः । स्वपरिग्रहमिदमङ्गुलीयकं राज्ञः संबन्धि । एवं मन्तव्यमिति शेषः । अनेन राजराजकीययोः सामान्येन सत्यरूपेणैव वचनेन प्रच्छादनं कृतमिति गम्यते । न ह्येतदङ्गुलीयकमङ्गुलीवियोगमार्यस्यार्हति । तव वचनेनैव अनृणा नामैषा । अणरिणा इत्यत्र 'अणणिञ् नञर्थे' इति नञर्थे अणेति निपातः । 'केवलस्य रिः' इति ऋकारस्य रित्वम् । **सखि शकुन्तल इति** ॥ मोचितास्यनुकम्पिना आर्येण । अथवा महाराजेन । गच्छेदानीम् । अथवा महाराजेनेत्यनेन राज्ञा प्रच्छादितोऽपि राजभावस्तासामभिज्ञात एवेति

(आत्मगतं) यद्यात्मनः प्रभविष्यामि । (प्रकाशं) का त्वं विसृष्ट-
व्यस्य रोद्धव्यस्य वा ।

**राजा**—(शकुन्तलां विलोक्य, आत्मगतं) किं नु खलु यथा वयमस्या-
मेवमियमप्यस्मान्प्रति स्यात् । अथवा लब्धावकाशा मे प्रा-
र्थना । कुतः ।

**वाचं न मिश्रयति यद्यपि मद्वचोभिः**
**कर्णं ददात्यभिमुखं मयि भाषमाणे ।**
**कामं न तिष्ठति मदाननसंमुखी सा**
**भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २७ ॥**

---

गम्यते । यद्यात्मनः प्रभविष्यामि । नाहं गमने स्ववशा । किंतु मन्मथ-
परवशेत्यर्थः । का त्वं विसृष्टव्यस्य वा रोद्धव्यस्य वा । कार्यस्येत्युभयत्र
शेषः । का त्वं, न प्रभुरित्यर्थः । [illegible]मस्यां यथा यत्प्रकारवन्तः साभिलाषा
इत्यर्थः । इयमस्मान् प्रत्येवं स्यात् । काकुरनुसंधेया । साभिलाषा स्या-
त्किमित्यर्थः । लब्धावकाशा लब्धाश्रया सार्थेत्यर्थः । प्रार्थना मनोरथः । तदेवो-
पपादयति—**कुत इत्यादि** ॥ कुत इति प्रश्ने । इयं शकुन्तला मे वचोभिः
वाचं न मिश्रयति न मेलयति यद्यपि । मयि भाषमाणे जल्पति सति कर्ण-
मभिमुखं यतो ददाति निक्षिपति । मम आननं मदाननं तस्य संमुखी कामं
प्रकामं न तिष्ठति नास्ते यद्यपि । अस्या दृष्टिः ईक्षणं भूयिष्ठमत्यर्थं अन्यविषया
अन्यो विषयो गोचरो यस्याः सा तथोक्ता । यतो न तु नैव । 'तु स्याद्भेदेऽ-
वधारणे' इत्यमरः । तस्मात् लब्धावकाशेत्यन्वयः । अत्र वाचं न मिश्रयती-
त्यनेन मदाननसंमुखी कामं न तिष्ठतीत्यनेन च वाक्यद्वयेन तस्या लज्जावत्त्वेन
वाङ्मिश्रणसांमुख्यप्रयोजनाभावे प्रतीतेऽपि अभिमुखं कर्णं ददातीत्यनेन
दृष्टिरन्यविषया न त्वित्यनेन वाक्यद्वयेन आकर्णनसहितत्वानन्यविषयदृष्टित्व-
रूपयोः प्रयोजनयोः संभवत्प्रतीतेः प्रार्थना लब्धावकाशेति मन्तव्यम् ।
लज्जावतीत्येतावन्मात्रस्यापि बहुमतत्वात् । अत्रेप्सितानुकूल्येन राज्ञः सुखप्राप्तेः

(नेपथ्ये)

भो भोस्तपस्विनः, संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

तुरगखुरहतस्तथा हि रेणु-
विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ २८ ॥

अपि च—

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥ २९ ॥

---

प्राप्तिर्नाम संध्यङ्गमुक्तम् । 'अर्थानामानुकूल्येन सुखाप्तिः प्राप्तिरिष्यते' इति । **नेपथ्य इत्यादि** ॥ भो भो हे तपस्विनः तपोवनसत्त्वरक्षायै संनिहिता इतो भवत । भवतां प्रत्यासन्नः किल । किलेति वार्तायाम् । **तुरगेत्यादि** ॥ परिणतः सायंतन इत्यर्थः । स चासौ अरुणः सूर्यः । शलभसमूह इव पतङ्गनिवह इव । **अपि चेत्यादि** ॥ तीव्राघातेन दृढप्रहारेण प्रतिहते भग्ने तरुस्कन्धे लग्नः प्रोतः एको दन्तो यस्य सः । क्रोधेन रुषा आकृष्टमाक्षिप्तं व्रततीनां लतानां वलयं वेष्टनं तस्य आसङ्गः संश्लेषः तेन संजातः पाशो बन्धनरज्जुः यस्य स तथोक्तः । मूर्तः नः अस्माकं तपसो विघ्न इव । भिन्नं विकीर्णं सारङ्गाणां यूथं कुलं येन स तथोक्तः । धर्मारण्यं तपोवनं प्रविशति । स्यन्दनालोकभीत इत्यनेन अयं गजो वन्य इति गम्यते । नेपथ्य इत्यादिना एतदन्तेन वाक्य-कदम्बेन नेपथ्यान्तर्गतैः पात्रैः राजागमनचरितसंरोधस्य सूचितत्वात् चूलिका नामार्थोपक्षेपकमुक्तं भवति । यथोक्तं—'द्वेधा वस्तुविभागः स्यात्प्रकाशः सूच्य

(सर्वाः कर्णं दत्त्वा किंचिदिव संभ्रान्ताः ।)

**राजा**—(आत्मगतं) अहो धिक् । सैनिका अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु । प्रतिगमिष्यामस्तावत् ।

**सख्यौ**—अज्ज, इमिणा अरण्णगअवुत्तन्तेण पज्जाउल म्ह । अणुजाणीहि णो उडअगमणस्स ।

आर्य, अनेनारण्यगजवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय ।

**राजा**—(ससंभ्रमं) गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे ।

(सर्वे उत्तिष्ठन्ति ।)

---

इत्यपि । निरस्तोऽनुचितस्तत्र सूच्यः स्याद्वस्तुविस्तरः ।' निरस्तो नाम प्रधानरसपोषविभागशून्य इत्यर्थः । कथासंघटनमात्रप्रयोजनो वस्तुविभाग उच्यते । अनुचितो नाम रङ्गस्थलप्रयोगानर्हवधसंबन्धस्नानभोजनादिरुच्यते । 'दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवान् । संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥ अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।' अत्रादिशब्देन शयनालिङ्गनचुम्बनादीनि गृह्यन्ते । तानि उद्वेगकारित्वात् प्रयोगानुचितानि । तस्य प्रतिपादकान्याह—'अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् । अर्थोपक्षेपकाणि स्युः विष्कम्भश्च प्रवेशकः । चूलिकाङ्कावतारश्च तथा ङ्कमिकामित्यपि ।' तत्र चूलिका—'नेपथ्यान्तःस्थितैः पात्रैः चूलिकार्थस्य सूचना । विष्कम्भादिषु चान्ते वा प्रयोगोऽस्याः प्रकीर्तितः ॥' इति । अत्रेयमङ्के प्रयुक्ता । अत्र संरोधस्य निरस्तत्वादनुचितत्वाच्च सूचिकाऽनुसंधेया । **सर्वा इति** ॥ धिगिति निन्दायाम् । 'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः । प्रतिगमिष्यामः अभिमुखं यास्यामः । उपरोधनिवारणायेति शेषः । आर्य अनेनारण्यगजवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि उटजगमनाय । रण्ण इत्यत्र वालाब्बरण्य इत्याद्यक्षरलोपः । **सख्याविति** ॥ असंभावितसत्कारं भूयोऽपि प्रेक्षणनिमित्तं

**सख्यौ**—अज्ज, असंभाविदसक्कारं अदिहिविसेसं भूओ वि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं ।

आर्य, असंभावितसत्कारमतिथिविशेषं भूयोऽपि प्रेक्षणनिमित्तं लज्जामहे आर्यं विज्ञापयितुम् ।

**राजा**—मा मैवम् । दर्शनेनैव भवतीनां सत्कृतोऽस्मि ।*

(शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता ।)

**राजा**—मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदानुयात्रिकान्प्रत्यवेक्ष्य नातिदूरे तपोवनस्य निवेशयामि । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् । मम हि—

---

लज्जामहे आर्यं विज्ञापयितुम् । सत्कृतः संभावितोऽस्मि । सव्याजं 'दर्भाङ्कुरेण चरणः क्षत' इत्यादिवक्ष्यमाणापदेशसहितं यथा तथा विलम्ब्य कालक्षेपं कृत्वा । अत्र प्रतीयमानः शकुन्तलामनस्संयोगो द्वितीयावस्थेति मन्तव्यम् । 'मनःसंगोऽनुरागेण सततं तद्विचिन्तनम् ।' मन्दौत्सुक्यो नगरगमनं प्रति । अल्पोत्कण्ठोऽस्मि । अत्र शकुन्तलाभावदर्शनेन आत्माभिलाषस्योत्थितत्वादनेन वाक्येन अभिलाषरूपस्य बीजस्य पुनरावर्तनात् समाधानं नाम संध्यङ्गमुक्तम् । 'यद्बीजस्यानुसंधानं तत्समाधानमिष्यते ।' इति । **यावदिति** ॥ आनुयात्रिकान् अनुचरान् । अनुयात्रा सहयात्रा, सा प्रयोजनमेषामिति तथोक्ताः । तदस्य प्रयोजनमित्यर्थे ठञ् । प्रत्यवेक्ष्य दृष्ट्वा नातिदूरे यावन्निवेशयामि । अदूरनिवेशने हेतुमाह—**न खल्वित्यादि** ॥ शकुन्तलाव्यापारात् शकुन्तलागोचरप्रवर्तनात् । आत्मानं स्वं निवर्तयितुं प्रत्याहर्तुम् । तदेवोपपादयति—

---

*शकुन्तला—अणसूए, अहिणवकुससूइपरिक्खदं मे चलणं कुरवअसाहापरिलग्गं च वक्कलं । दाव पडिपालेध मं जाव णं मोआवेमि ।

अनसूये, अभिनवकुशसूचिपरिक्षतं मे चरणं कुरवकशाखापरिलग्नं च वल्कलम् । तावत्प्रतिपालयत मां यावदेतन्मोचयामि । इत्यधिकः पाठः ॥

**गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।**
**चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ ३० ॥**

(इति निष्क्रान्ताः सर्वे ।)

**॥ इति प्रथमोऽङ्कः ॥**

---

हि यस्मात्कारणात् । शरीरं पुरः अग्रतः, सेनां प्रतीत्यर्थः । गच्छति याति । असंस्तुतं अपरिचितमवशमित्यर्थः । चेतः पश्चात् पृष्ठतः, शकुन्तलां प्रतीत्यर्थः । धावति त्वरितं गच्छति । तस्मात्कारणात् निवर्तयितुं न शक्नोमीति संबन्धः । अत्र पुरोगमनपश्चाद्धावनयोरुपमानमाह—**चीनांशुकमिवेत्यादि** ॥ चीनांशुकं नाम चीनदेशप्रभवो वस्त्रविशेषः । प्रतिवातं वाताभिमुखं नीयमानस्य आकृष्यमाणस्य । अत्र प्रतीयमानो दुष्यन्तस्य मनःसंयोगो द्वितीयावस्थेति मन्तव्यम् । भो भो तपस्विनः संनिहिता इत्यादिना अवान्तरप्रसङ्गेन शकुन्तला-दुष्यन्तयोरन्योन्यदर्शनादिव्यापाररूपस्य वस्तुनो विच्छेदे सति पुनर्दर्शनहेतु-त्वात् दुष्यन्तस्य चित्तासंगो बिन्दुरित्यवगन्तव्यम् । 'वस्तुनः सति विच्छेदे बिन्दुरच्छेदकारणम् ' इति । निष्क्रान्ताः सर्वे, नटा इत्यर्थः । तथा चोक्तं 'तेषामन्ते च निर्गमः' इति ॥

॥ इति शाकुन्तलटीकायां प्रथमोऽङ्कः ॥

# ॥ द्वितीयोऽङ्कः ॥

(ततः प्रविशति विषण्णो विदूषकः ।)

**विदूषकः**—(निःश्वस्य) हा हदोह्मि एदस्स मिअआसीलस्स रण्णो वअस्सभावेण । अअं मिओ अअं वराहो अअं सद्दूलो त्ति मज्झंदिणे वि गिम्हविरलपाअवच्छाआसु वणराईसु आहिण्डीअदि । पत्तसंकरकसाआइ कदुण्हाइ गिरिणईजलाइ पीअन्ति । अणिअदवेलं सुल्लमंसभूइट्ठं आहारं अण्हीअदि । तुरगाणुधावणकण्डइदसन्धिणो रत्तिम्मि वि मे णिकामं सइदव्वं णत्थि । तदो महन्ते एव्व पच्चूसे दासीए पुत्तेहिं सउणलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदो म्हि । एदावंतेण वि दाव पीडा ण णिक्कमदि । तदो गण्डस्स उवरि पिडआ संवुत्ता । हिओ किल अम्हेसु ओहीणेसु तत्तहोदो मिआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्दला णाम मह अधण्णदाए दंसिदा । संपदं णअरगमणस्स कहं वि ण करेदि । अज्ज सविसेसं तं एव्व चिन्तअन्तस्स मे अक्खीसु पभादं आसि । का गदी । जाव णं किदाचारपडिकम्माणं पेक्खामि । (इति परिक्रम्यावलोक्य च) एसो बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं पडिवुदो इदो एव्व आअच्छदि वअस्सो । होदु । अङ्गभङ्गविअलो विअ भविअ चिट्ठिस्सं । जइ एव्वं वि णाम विस्समं लहेअं ।

(निःश्वस्य) हा हतोऽस्मि, एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन। अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्यंदिनेऽपि ग्रीष्मविरलपादपच्छायासु वनराजीष्वाहिण्ड्यते। पत्रसंकरकषायाणि कदुष्णानि गिरिनदीजलानि पीयन्ते। अनियतवेलं शूल्यमांसभूयिष्ठमाहारोऽश्यते। तुरगानुधावनकण्टकितसक्थस्य रात्रावपि मे निकामं शयितव्यं नास्ति। ततो महत्येव प्रत्यूषे दास्याःपुत्रैः श्वगणलुब्धैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि। एतावतापि तावत्पीडा न निष्क्रा-

---

## ॥ अथ द्वितीयोऽङ्कः ॥

कविरिदानीं कथासंघटनाय अर्थोपक्षेपकं प्रवेशकं प्रस्तौति। 'अङ्कयोर्मध्यवर्ती च मध्यपात्रप्रयोजितः। शुद्धो भवति मिश्रस्तु नीचपात्रप्रयोजितः॥ विष्कम्भ एव नाट्यज्ञैः प्रवेशक इति स्मृतः॥' इति प्रसङ्गात्। विष्कम्भलक्षणं तु 'अङ्कशेषकथांशानां भूतानां भाविनामपि। संक्षेपेण समस्तानां विष्कम्भः सूचना भवेत्॥ शुद्धो मिश्रस्तु तद्भेदौ मध्यपात्रप्रयोजितः। शुद्धो भवति मिश्रस्तु नीचपात्रप्रयोजितः॥ प्रधानादपरं मध्यं नायकादेरुदात्तवाक्। नीचं स्यादनुदात्तोक्ति नारीपरिजनादिकम्॥' उदात्तवाक् गभीरार्थसंस्कृतवाक्। अत्रादिशब्देन अमात्यादीनां ग्रहणम्। अनुदात्तोक्ति अगम्भीरार्थप्रकृति नारीपरिजनादिकम्। अत्र आदिशब्देन विदूषकम्लेच्छादीनां ग्रहणम्। विदूषको नाम नायकपुरुषार्थसाधकः हास्यकारी नर्मसुहृदुच्यते। हा हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन। अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्यंदिने ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यते। अभितः पर्यट्यते। हिडि गत्यनादरयोरिति धातोरिदं रूपम्। पत्रसंकरकषायाणि कदुष्णानि गिरिनिर्झरजलानि पीयन्ते। अनियतवेलं शूल्यमांसभूयिष्ठमाहारोऽश्यते। आहारमित्यत्र प्राकृते लिङ्गमतन्त्रमित्युक्तत्वान्नपुंसकत्वम्। तुरगानुधावने क्षुभितसक्थ्नः। **रात्र्यामपि**॥ रत्तिमित्यत्र प्राकृतभाषायां आहोसिति सप्तम्यर्थे द्वितीया। मे शयितव्यं नास्ति। ततो महत्येव प्रत्यूषे दास्याः पुत्रैः श्वगणलुब्धैः वन्यग्रहणकोलाहलेन प्रतिबोधितोऽस्मि। एतावतापि पीडा न निष्क्रमते। ततो

मति । ततो गण्डस्योपरि पिटका संवृत्ता । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला नाम ममाधन्यतया दर्शिता । सांप्रतं नगरगमनस्य कथामपि न करोति । अद्य सविशेषं तदेव चिन्तयतो मेऽक्ष्णोः प्रभातमासीत् । का गतिः । यावदिमं कृताचारपरिकर्माणं पश्यामि । (इति परिक्रम्यावलोक्य च) एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति वयस्यः । भवतु । अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रमं लभेय ।

(इति दण्डकाष्ठमवलम्ब्य स्थितः ।)

॥ प्रवेशकः ॥

(ततः प्रविशति यथोद्दिष्टपरिवारो राजा ।)

**राजा—कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।**
**अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥**

---

गण्डस्योपरि पिटकाः संवृत्ताः । ह्यः पूर्वेद्युरित्यर्थः । किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारिणः आश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला नाम ममाधन्यतया दर्शिता । तत्र रात्रौ राज्ञा विदूषकस्याग्रतः शकुन्तलादर्शनादिकं किंचित्सूचितमित्यनुसंधेयम् । अयमर्थः, तामेवाश्रमललामभूतामित्यनेन वक्ष्यमाणेन च गम्यते । सांप्रतं नगरगमनस्य कथामपि न करोति । अद्य सविशेषं तदेव चिन्तयतो मे प्रभातमासीदक्ष्णोः । अनेनाक्षिनिमीलनाभावो गम्यते । का गतिः । यावदिमं कृतोपचारपरिकर्माणं पश्यामि । एष स्वहस्तावापतूणीरबाणासनहस्ताभिः वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति वयस्यः । अत्र यवनीशब्देन राज्ञः शस्त्रधारिण्य उच्यन्ते । यथोक्तं शब्दार्णवे—'किराती चामरधरा यवनी शस्त्रधारिणी ।' भवतु अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रामं लभेय । दण्डकाष्ठं यष्टिमवलम्ब्य आधारं कृत्वा स्थितः । प्रवेशकः ॥

ततः परमङ्कः प्रस्तूयते । यथोद्दिष्टपरिवारः विदूषकसंदिष्टपरिजनः । **कामं प्रियेति** ॥ प्रिया शकुन्तला काममत्यर्थं न सुलभा ऋषिसंबन्धि-

(स्मितं कृत्वा) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते। तथाहि—

**स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया**
**यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।**
**मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी**
**सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति ॥२॥**

कन्यात्वेन दुःसाध्या। मनस्तु तद्भावदर्शनाश्वासि। तस्या भावानां अखिलानुभावानां दर्शनेन आश्वासि संतुष्यत्। आश्वासे हेतुमाह—मनसिजेऽकृतार्थे अनिर्वर्तितप्रयोजने सत्यपि। मन्मथस्य प्रयोजनं मिथुनीकरणम्। उभयोः स्त्रीपुंसयोः प्रार्थना अन्योन्याभिलाषः। अनेन गम्यमानोऽभिलाषोऽत्राङ्के बीजमित्यनुसंधेयम्। 'अङ्के बीजबिन्दुसमन्वित' इत्युक्तेः। मनस्तु तद्भावदर्शनाश्वासीत्यत्र भाविरतेर्गम्यमानत्वात् संकल्प इति तृतीयावस्था दर्शिता। 'मनोरथः स्यात्संकल्पस्तत्समागमगोचरः' इति। 'मनोरथाश्वासवशादन्तः साक्षात्प्रतीयते। हृज्जनःसङ्गसंकल्प इति कैश्चिदुदीरितः॥' इत्युक्तेः। स्मितं कृत्वा हासं विधाय। वक्ष्यमाणमर्थं मनसि निधाय आत्मानमपहास्येत्यर्थः। **एवमिति॥** एवं वक्ष्यमाणप्रकारेण आत्मनः स्वस्य अभिप्रायेण अभिलाषेण संभाविता कल्पिता इष्टजनस्य चित्तवृत्तिः अभिलाषः येन सः। विडम्ब्यते अपहास्यते। यथाहमस्यामभिलाषी तद्वदियमपि मय्यभिलाषिणीति कल्पनापरो लिप्सतीति भावः। परिहासवृत्तिं विवृणोति—**स्निग्धमिति॥** अन्यतोऽपि यत्र कुत्रापि नयने प्रेरयन्त्या व्यापारन्त्या तया शकुन्तलया कृतं स्निग्धं प्रसन्नं वीक्षितं वीक्षणं यत्। नितम्बयोः गुरुतया भारेण विलासादिव मन्दं यातं शनैर्यातं यत्। मा गाः न गच्छेति उपरुद्धया वारितया सखी प्रियंवदा सासूयं सेर्ष्यं उक्तेति यत्। तत्सर्वं स्निग्धवीक्षणविलासमन्दयानसासूयवचनरूपं चाखिलम्। मत्परायणम् अहं परायणमाश्रयो यस्य तत्तथोक्तम्। अहो आश्चर्यम्। अत्राश्चर्यकारणमन्यथाप्युपपद्यमानानां भावानामात्मविषयत्वात् अनुरूपमिति मन्तव्यम्। अर्थान्तरन्यासमाह—**कामीत्यादि॥** कामी कामुकः

**विदूषकः**—(तथा स्थित एव) भो वअस्स, हत्था मे ण पसरन्ति । वाआमेत्तं एव्व । विजई होहि ।

(तथा स्थित एव) भो वयस्य, हस्तौ मे न प्रसरतः । वाङ्मात्रमेव । विजयी भव ।

**राजा**—कुतोऽयं गात्रोपघातः ।

**विदूषकः**—कुदो किल सअं अच्छी आउलीकरिअ अस्सुकारणं पुच्छेसि ।

कुतः किल स्वयमक्षिणी आकुलीकृत्याश्रुकारणं पृच्छसि ।

**राजा**—न खल्ववगच्छामि ।

**विदूषकः**—भो वअस्स, जं वेदसो खुज्जलीलं विडम्बेदि तं किं अत्तणो पहावेण, उद णईवेअस्स ।

भो वयस्य, यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण, उत नदीवेगस्य ।

**राजा**—नदीवेगस्तत्र कारणम् ।

**विदूषकः**—मम वि भवं । ममापि भवान् ।

**राजा**—कथमिव ।

**विदूषकः**—एव्वं राअकज्जाणि उज्झिअ तारिसेसु आउलप्पदेसेसु वणचरवुत्तिणा तुए होदव्वं । जं सच्चं पच्चहं सावदसमुच्छा-

---

स्वतां स्वकीयत्वम् इष्टवस्तुनीति शेषः । पश्यति जानाति । तथा स्थित एव पूर्वोक्तप्रकारेणैव स्थितः । भो वयस्य हस्तौ मे न प्रसरतः । वाङ्मात्रमेव प्रसरतीति संबन्धः । विजयी भव । अयं गात्रोपघातः अङ्गवैकल्यम् । कुतः कस्मात् । कुत इति प्रश्ने । कुतः किल स्वयमेव अक्षिणी आकुलीकृत्य अश्रुकारणं पृच्छसि । न खल्ववगच्छामि । खलु जिज्ञासायाम् । भो वयस्य यद्वेतसः कुब्जलीलां विडम्बयति तत्किमात्मनः प्रभावेण उत नदीवेगस्य ।

रणेहिं संखोहिअसंधिबन्धाणं मम गत्ताण अणीसो म्हि संवुत्तो । ता पसादइस्सं । विसज्जेहि मं एक्काहं वि दाव विस्समिदुं ।

एवं राजकार्याण्युज्झित्वा तादृशेष्वाकुलप्रदेशेषु वनचरवृत्तिना त्वया भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि । विसर्जय मामेकाहमपि तावद्विश्रमितुम् ।

**राजा**—(स्वगतं) अयं चैवमाह । ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लबं चेतः । कुतः ।

> **न नमयितुमधिज्यमस्मि शक्तो**
> **धनुरिदमाहितसायकं मृगेषु ।**
> **सहवसतिमुपेत्य यैः प्रियायाः**
> **कृत इव मुग्धविलोकितोपदेशः ॥ ३ ॥**

**विदूषकः**—(राज्ञो मुखं विलोक्य) अत्तभवं किं वि हिअए करिअ मन्तेदि । अरण्णे क्खु मए रुदिअं ।

(राज्ञो मुखं विलोक्य) अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये खलु मया रुदितम् । Cry in the wilderness

---

ममापि भवान् । यस्मादेवं राजकार्याण्युज्झित्वा तादृशेष्वेव आकुलप्रदेशेषु त्वया वनचरवृत्तेन भवितव्यम् । तस्मात् सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धानां मे गात्राणामनीशोऽस्मि संवृत्तः । तस्मात्प्रसादयिष्यामि । विसर्जय मामेकाहमपि विश्रमितुम् । अनुस्मृत्य अनुचिन्त्य । मृगया विक्लबं विह्वलं पराङ्मुखमित्यर्थः । **न नमयितुमिति** ॥ स्पष्टोऽर्थः । तत्र भवान् किमपि हृदये कृत्वा मन्त्रयते । अरण्ये रुदितं मया । आज्ञापयतु भवान् ।

**राजा**—(सस्मितं) किमन्यत् । अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

**विदूषकः**—चिरं जीअ । चिरं जीव । (इति गन्तुमिच्छति ।)

**राजा**—वयस्य, तिष्ठ । सावशेषं मे वचः ।

**विदूषकः**—आणवेदु भवं । आज्ञापयतु भवान् ।

**राजा**—विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ।

**विदूषकः**—किं मोदअखण्डिआए । किं मोदकखण्डिकायाम् ।

**राजा**—यत्र वक्ष्यामि ।

**विदूषकः**—गहिदो खणो । गृहीतः क्षणः ।

**राजा**—कः कोऽत्र भोः ।

(प्रविश्य)

**दौवारिकः**—(प्रणम्य) आणवेदु भट्टा । आज्ञापयतु भर्ता ।

---

विश्रान्तेन भवता ममान्यस्मिन् अनायासे कर्मणि सहायेन भवितव्यम् । अन्यस्मिन् कर्मणि शकुन्तलागोचरप्रसङ्ग इत्यर्थः । अत्र शकुन्तलां प्रति राज्ञः उपायेन प्रवर्तनस्य गम्यमानत्वात् प्रयत्न इति द्वितीयावस्था दर्शितेति मन्तव्यम् । यथोक्तं—'प्रयत्नस्तु फलप्राप्तौ प्रवर्तनमुपायतः' इति । अत्र बिन्दुप्रयत्नानुगमनं प्रतिमुखसंधिरिति मन्तव्यम् । 'लक्ष्यालक्ष्यस्तदुद्भेदो यत्र प्रतिमुखं तु तत्' इति । अस्याङ्गानि विलासादीनि । 'विलासः परिसर्पश्च विधूतं शमनर्मणी । नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम् ॥ वज्रं पुष्पं परिन्यासो वर्णसंहार इत्यपि ।' इति त्रयोदशाङ्गानि । किं मोदकखण्डनेषु । यत्र वक्ष्यामि । यस्मिन् कर्मणि सहायेन भवितव्यमिति कथयिष्यामि तस्मिन् कर्मणीत्यर्थः । गृहीतः क्षणः । अत्र क्षणशब्दो व्यापारान्तररहितस्थितौ वर्तते । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः । आज्ञापयतु भर्ता । परिजनैर्भर्तेति

राजा—रैवतक, सेनापतिस्तावदाहूयताम् ।

दौवारिकः—तह । तथा । (इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य) एसो अण्णावणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी चिट्ठइ । उवसप्पदु अज्जो ।

एष आज्ञापनोत्कण्ठो भर्तेतो दत्तदृष्टिस्तिष्ठति । उपसर्पत्वार्यः ।

सेनापतिः—(राजानमवलोक्य) अदृष्टदोषे स्वामिनि मृगया केवलं गुण एव संवृत्ता । तथा हि देवः

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम् ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

(उपेत्य) जयतु स्वामी । गृहीतश्वापदप्रचारमरण्यम् । किमद्यापि स्थीयते ।

---

-वाच्यम् । यथोक्तं—'स्वामी चैवेति नृपतिर्भृत्यैर्भर्तेति चाधमैः ।' इति । रैवतकेति दौवारिकस्य नाम । एष आज्ञापनोत्कण्ठो भर्ता इतो दत्तदृष्टिस्तिष्ठति । उपसर्पत्वार्यः । उत्कण्ठः उद्ग्रीवः । दिण्ण इत्यत्र स्वप्नादिपाठादित्वम् । 'पञ्चदशदत्तपञ्चशति णः' इति णत्वम् । अदृष्टदोष इति ॥ मृगयार्थो विहारः परिश्रमः । अदृष्टाः अलक्षिताः कार्श्यादयः यस्मिन्स तथोक्तः । सगुणः गुणसहितः संवृत्तः । तदेवोपपादयति—तथा हीति ॥ देव इत्यादि । अनवरते धनुषि ज्यायाः मौर्व्याः आस्फालनेन आकर्षणेन क्रूरः कठिनः पूर्वः पूर्वभागः यस्य तत्तथोक्तम् । रविकिरणसहिष्णु सूर्यकिरणसहनशीलम् । अलंकृञित्यादिना इष्णुच् । अभिन्नं असंपृक्तम् । व्यायतत्वात् व्यायामवत्त्वात् अपचितमपि कृशमपि । प्राणसारं प्राणेन शक्त्या सारम् उत्कृष्टं सत् । अलक्ष्यम् अपचितमित्यलक्ष्यं गात्रं देवो बिभर्तीति संबन्धः । निगृहीतश्वा-

राजा—मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माढव्येन ।

सेनापतिः—(जनान्तिकं) सखे, स्थिरप्रतिबन्धो भव । अहं ताव-त्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये । (प्रकाशं) प्रलपत्वेष वैधेयः । ननु प्रभुरेवात्र निदर्शनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥५॥

विदूषकः—अत्तभवं पकिदिं आपण्णो । तुमं दाव अडवीदो अडवीं आहिण्डन्तो णरणासिआलोलुपस्स कस्स वि जुण्णरिच्छस्स मुहे पडिस्ससि ।

---

पदप्रचारं निगृहीतो निरुद्धः श्वापदानां हिंस्रपशूनां व्याघ्रादीनां प्रचारः संचारो यस्मिंस्तत्तथोक्तम् । किमद्यापि स्थीयते । किमित्याक्षेपे । मृगयापवादिना मृगयामपवदति दूषयतीति तथोक्तस्तेन । माढव्य इति विदूषकस्य नाम । प्रलपतु । यद्वा तद्वा भाषतां । वैधेयः अज्ञः । 'अज्ञमूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः । प्रभुरेव निदर्शनं ननु, दृष्टान्तः खलु । मृगयानुगुण इति शेषः । **मेदश्छेदेत्यादि** ॥ मेदसः छेदेन कृशमुदरं यस्य तत्तथोक्तम् । लघु गौरवशून्यं सत् उत्थानयोग्यमुद्गमनार्हमश्वारोहणादिव्यापारक्षममित्यर्थः । सत्त्वानां प्राणिनां भयक्रोधयोः सतोः विकृतिमत् अपरित्यक्तविकृतिकं भीतं क्रुद्धमित्यर्थः । चले चञ्चले लक्ष्ये इषवः सिध्यन्ति निष्पद्यन्ते सफलप्रयोगा भवन्तीति यावत् । उत्कर्षः अतिशयः । अस्तीति शेषः । मृगयां व्यसनमिति मिथ्या हि मृषैव वदन्ति । व्यसनं कामजो दोषः । 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः । ईदृक् एवंविधो विनोदः क्रीडा । कुतः कस्मात् । अत्र काकुरनुसंधेया । नान्यस्मादित्यर्थः । अत्र भवान् प्रकृतिमापन्नः । त्वं तावत्

अत्रभवान्प्रकृतिमापन्नः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे पतिष्यसि ।

**राजा**—भद्र सेनापते, आश्रमसंनिकृष्टे स्थिताः स्मः । अतस्ते वचो नाभिनन्दामि । अद्य तावत्

**गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं**
**छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।**
**विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले**
**विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥६॥**

**सेनापतिः**—यत्प्रभविष्णवे रोचते ।

**राजा**—तेन हि निवर्तय पूर्वगतान्वनग्राहिणः । यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः । पश्य ।

---

अटवीतोऽटवीं भ्रमन् नरमांसलोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे निपतिष्यसि । जुण्ण इत्यत्र उलजीर्ण इतीकारस्योत्वम् । किं बहुना । विवक्षितेन मृगयानिवृत्तिकथनेनेति शेषः । तव वचो नाभिनन्दामि, न संमन्ये । **अद्येत्यादि** ॥ अद्य अत्राह्नि । तावत् साकल्येन । **गाहन्तामिति** ॥ महिषाः निपानसलिलमाहावसलिलम् । 'आहावस्तु निपानं स्यात्' इत्यमरः । छायासु वृक्षच्छायासु बद्धकदम्बकं कृतयूथं रोमन्थं हनुसंचलनं अभ्यस्यतु आवर्तयतु । वराहततिभिः सूकरयूथैः पल्वले वेशन्ते मुस्तानां क्षतिः अवदारणं विस्रब्धं यथा तथा क्रियताम् । शिथिलज्याबन्धं श्लथमौर्वीकम् अवरोपितगुणमित्यर्थः । विश्रामं विश्रान्तिं लभताम् । विश्रामशब्दः पाणिनीये 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इति वृद्धिप्रतिषेधेऽपि व्याकरणान्तरसिद्धत्वात् साधुः । तथा च भवभूतिनाप्युक्तं 'विश्रामो हृदयस्य यत्र' इति । यत् प्रभविष्णवे स्वामिने रोचते स्वदते तत्क्रियताम् । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानसंज्ञा । तेन हि अस्मदभीष्टसंमतया हेतुना । वनग्राहिणः वनावरोधकान् वागुरिकानित्यर्थः । निवर्तय प्रत्यावर्तय । यथा दूरात् परिहरिष्यन्ति तथा निषेद्धव्याः । निषेधकारणमाह—**शमप्रधानेष्विति** ॥ शमः

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ॥७॥

**सेनापतिः**—यदाज्ञापयति स्वामी ।

**विदूषकः**—धंसदु दे उच्छाहवुत्तन्तो । गच्छ दासीएउत्त ।
ध्वंसतां त उत्साहवृत्तान्तः । गच्छ दास्याः पुत्र ।

(निष्क्रान्तः सेनापतिः ।)

**राजा**—(परिजनं विलोक्य) अपनयन्तु भवन्तो मृगयावेषम् । रैवतक, त्वमपि स्वं नियोगमशून्यं कुरु ।

**परिजनः**—जं देवो आणवेदि । यद्देव आज्ञापयति ।

(इति निष्क्रान्तः ।)

**विदूषकः**—किदं भवदा दाणिं णिम्मच्छिअं । संपदं एदस्सिं पादवच्छाआए अविरललदाविदाणसणाहे आसणे णिसीददु भवं, जाव अहं वि सुहासीणो होमि ।

कृतं भवतेदानीं निर्मक्षिकम् । सांप्रतमेतस्यां पादपच्छायायामविरललतावितानसनाथे आसने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि ।

---

शान्तिः प्रधानं मुख्यो गुणो येषां तेषु । गूढमप्रकाशं दाहात्मकं दाहस्वभावं तेजः प्रभावोऽस्ति । स्पर्शानुकूलाः स्पर्शे अनुकूलाः सूर्यकान्ता इव अन्यतेजोऽभिभवात् तेजोऽन्तरतिरस्कारात् गूढं तत् तेजः वमन्ति उद्गिरन्ति । वमन्तीत्यस्य कर्तृसापेक्षत्वात्तपोधना इति विभक्तिपरिणामः कर्तव्यः । दर्शिते उत्साहवृत्तान्ते । गच्छ दास्याः पुत्र । दास्याः पुत्रेत्यत्र 'षष्ठ्या आक्रोश' इत्यलुक् । भवत्य इति ॥ मृगयावेषं मृगयार्थाकल्पं हरितकञ्चुकादिकमपनयन्तु । नियोगमधिकारमशून्यं कुरु । सनाथं कुर्वित्यर्थः । यद्देव आज्ञापयतीत्युक्त्वा निष्क्रान्तः । कृतं भवतेदानीं निर्मक्षिकम् । मक्षिकाभावः निर्मक्षिकम् । 'अव्ययं विभक्ति—'

**राजा**—गच्छाग्रतः ।

**विदूषकः**—एदु एदु भवं । एत्वेतु भवान् ।

(इत्युभौ परिक्रम्योपविष्टौ)

**राजा**—माढव्य, अनवाप्तचक्षुःफलोऽसि । येन त्वया दर्शनीयं न दृष्टम् ।

**विदूषकः**—णं भवं अग्गदो मे वट्टदि । ननु भवानग्रतो मे वर्तते ।

**राजा**—सर्वः खलु कान्तमात्मीयं पश्यति । अहं तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

**विदूषकः**—(स्वगतं) होदु । ण से अवसरं दाइस्सं । (प्रकाशं) भो वअस्स, अज्ज दे तावसकण्णआ किं अब्भत्थणीआ दीसदि ।

(स्वगतं) भवतु । नास्यावसरं दास्यामि । (प्रकाशं) भो वयस्य, अद्य ते तापसकन्यका किमभ्यर्थनीया दृश्यते ।

**राजा**—सखे, न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते ।

---

इत्यादिना अर्थाभावेऽव्ययीभावः । सांप्रतमेतस्यां पादपच्छायायामविरललतावितानसनाथे आसने निषीदतु भवान् । यावदहमपि सुखासीनो भवामि । एत्वेतु भवान् । सखे वयस्य अनवाप्तचक्षुःफलोऽसि, अलब्धनयनप्रयोजनोऽसि । येन त्वया दर्शनीयं द्रष्टव्यं न दृष्टम् । तस्मादिति पूर्ववाक्येन संबन्धः । ननु भवानग्रतो मे वर्तते । तद्दर्शनीयस्त्वं दृश्यसे । तस्मादवाप्तचक्षुःफलोऽस्मीति भावः । **सर्वः खल्विति** ॥ सर्वः सकलो जनः आत्मीयं स्वीयं कान्तं मनोहरं पश्यति खलु मन्यते । **अहं त्विति** ॥ आश्रमललामभूताम् । 'ललामास्त्री ललामापि प्रभावे पुष्करे ध्वजे । श्रेष्ठे भूषापुण्ड्रशृङ्गपुच्छचिह्नविलिङ्गके ॥' इति यादवः । तामेव पूर्वप्रशंसितामेव अधिकृत्य उद्दिश्य ब्रवीमि । भवतु नास्यावसरं दास्यामि । अवसरं वागवसरम् । भो वयस्य अद्य ते तापसकन्यका किमभ्यर्थनीया दृश्यते । **सुरयुव**-

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥८॥

**विदूषकः**—(विहस्य) भो वअस्स, जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिणीफळे अहिळासो भवे, तह इत्थिआरअणपरिभाविणो भवदो इअं अब्भत्थणा ।

(विहस्य) भो वयस्य, यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्त्रिणीफले अभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ।

**राजा**—न तावदेनां पश्यसि, येनैवमवादीः ।

**विदूषकः**—तं क्खु रमणिज्जं एव्व जं भवदो वि विम्हअं उप्पादेदि ।

तत्खलु रमणीयमेव यद्भवतोऽपि विस्मयमुत्पादयति ।

**राजा**—वयस्य, किं बहुना ।

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

---

**तीति** ॥ मुनेः कण्वस्यापत्यं दुहिता सुरयुवतिसंभवं मेनकासंभूतं तदुज्झिताधिगतं तया मेनकया उज्झितं त्यक्तम् । अधिगतं प्राप्तं किल । किलेति वार्तायाम् । शेषं सुगमम् । भो वयस्य यथा कस्यापि पिण्डखर्जूरैः खाद्यविशेषैरुद्वेजितस्य तिन्त्रिणीफले अभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना । तत्खलु रमणीयमेव, यद्भवतोऽपि विस्मयमुत्पादयति । **चित्रे निवेश्येति** ॥ विधिना ब्रह्मणा चित्रे आलेख्ये निवेश्य परिकल्पितः संपादितः सत्त्वस्य प्राणानां योगः संबन्धः यस्याः सा । यथा वस्तु रमणीयं भवति तथा चित्रे कर्तुं शक्यत इति चित्रे निवेश्येत्युक्तम् । अनेन सर्वाङ्गा-

विदूषकः—जइ एव्वं, पच्चादेसो क्खु रूववदीणं ।
यद्येवं, प्रत्यादेशः खलु रूपवतीनाम् ।

राजा—इदं च मे मनसि वर्तते ।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १० ॥

---

नवद्यत्वमुक्तम् । अत्रासंतुष्टः पक्षान्तरमाह—**रूपोच्चयेनेति** ॥ रूपाणां चन्द्राद्युपमानवस्तुसंबन्ध्याकारविशेषाणाम् उच्चयेनैव उपादानकारणेन मनसा साधनेन कृता नु निर्मिता किम् । अनेन करतलस्पर्शक्लेशितेभ्यः अङ्गेभ्यो मनोनिर्मितान्यङ्गानि सुकुमाराणीति गम्यते । वितर्कद्वये कारणमाह—धातुर्विभुत्वं सामर्थ्यं तस्याः शकुन्तलाया वपुश्च अनुचिन्त्य विचार्य स्थितवतो मे सा शकुन्तला अपरा अन्या अपूर्वा स्त्रीरत्नसृष्टिः प्रतिभातीति यत् तस्मादिति संबन्धः । एतदारभ्य रूपादिगुणानां वर्णितत्वाद्गुणकीर्तनं नाम चतुर्थावस्था सूचिता । 'भवेद्गुणस्तुतिस्तस्य रूपादिगुणकीर्तनम्' इत्युक्तेः । यद्येवं प्रत्यादेशः खलु रूपवतीनाम् । प्रत्यादेशो निराकृतिरित्यमरः । **अनाघ्रातमित्यादि** ॥ अनाघ्रातम् अनुपात्तगन्धं पुष्पमेव । अनेन सौरभ्यमुक्तम् । कररुहैः नखैः अलूनमच्छिन्नं किसलयमेव । अनेन सौकुमार्यमुक्तम् । अनाविद्धं असमुत्कीर्णं रत्नमेव । अनेन कान्तिमत्त्वमुक्तम् । अनास्वादितरसम् अनास्वादितरुचि नवं मधु क्षौद्रमेव । अनेन आस्वाद्यत्वमुक्तम् । पुण्यानामनुभवितृसंबन्धिनां, अखण्डमन्यूनं फलमेव । अनेन अत्यन्तस्पृहणीयत्वमुक्तम् । चशब्दो वाक्यसमुच्चये । एभिर्विशेषणैः केनापि नानुभूतेत्युक्तं भवति । कन्यकेति च । तद्रूपं तस्या रूपं वा । इहास्मिन् रूपविषये विधिः कं भाग्यवन्तं भोक्तारमनुभवितारं समुपस्थास्यति न जाने नावगच्छामि । 'किंवृत्ते लिप्सायाम्' इति लृट् । अत्र राज्ञ इष्टार्थविषयकमोहस्य गम्यमानत्वात् विलासो नाम प्रतिमुखसंधेः प्रथमाङ्गमुक्तं भवति । 'इष्टार्थविषयो मोहो विलास इति मन्वते ।' तेन

विदूषकः—तेण हि लहु परित्ताअदु णं भवं । मा कस्स वि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे पडिस्सदि ।

तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते पतिष्यति ।

राजा—परवती खलु तत्रभवती । न च संनिहितोऽत्र गुरुजनः ।

विदूषकः—अत्तभवन्तं अन्तरेण कीरिसो से दिट्ठिराओ ।

अत्रभवन्तमन्तरेण कीदृशोऽस्या दृष्टिरागः ।

राजा—निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु—

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥ ११ ॥

---

हि पूर्वोक्तेन गुणवत्त्वेन हेतुना लघु शीघ्रं परित्रायतां भवान् । यथा मा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते पतिष्यति । अत्र परिहासस्य गम्यमानत्वात् नर्मेति संध्यङ्गमुक्तं भवति । 'परिहासवचो नर्म यच्चोचितमुदीरितम्' इति । तत्रभवन्तमन्तरेण कीदृशोऽस्या दृष्टिरागः चक्षुःप्रीतिरभिलाष इत्यर्थः । अत्र अन्तरेणेत्ययं निपात उद्देश्यार्थे वर्तते । 'अन्तरान्तरेणयुक्ते' इति द्वितीया । तथा मालविकायां प्रयुक्तम्—अइरप्पउत्तोवदेसं णट्टअं अन्तरेण कीरिसी मालविअत्ति । एवमभिलाषं कथयति—**अभिमुखे मयीत्यादि** ॥ मयि अभिमुखे संमुखे ईक्षितं दर्शनं संहृतं लब्धमपि निवर्तितम् । अनेन पूर्वं यथेच्छं पश्यतीति गम्यते । हसितम् अभिलाषजनितो हासः । अन्यनिमित्तं कृतोदयं अभिलाषव्यतिरेकेण कृतः उदयः यस्य तत्तथोक्तम् । अनेन अभिलाषः प्रच्छादित इति गम्यते । हासोदयो विलासस्यानुभाव इति लाक्षणिकैरुक्तम् । 'अभिलाषे पुनर्हर्षहासकान्तदृगादयः' इति । अतः अस्मात्कारणात् **मदनो** विनयवारितवृत्तिः सन् विनयेन शीलेन वारिता निरुद्धा वृत्तिः प्रसरो **यस्य**

**विदूषकः**—किंणु क्खु सा दिट्ठमेत्तस्स तुह अंकं आरोहदि ।

किंनु खलु सा दृष्टमात्रस्य तवाङ्कमारोहति ।

**राजा**—मिथःप्रस्थाने पुनः शालीनतयापि काममाविष्कृतो भाव-स्तत्रभवत्या । तथा हि ।

**दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे**
**तन्वी स्थिता कतिचिदेव पदानि गत्वा ।**
**आसीद्विवृत्तवदना च विमोचयन्ती**
**शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥**

**विदूषकः**—जइ एव्वं गहीदपाहेओ होहि । किदं तुए उववणं तवोवणं त्ति पेक्खामि ।

यद्येवं गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति पश्यामि ।

**राजा**—सखे, तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय ताव-त्केनापदेशेन सकृदप्याश्रमे वसामः ।

**विदूषकः**—को अवरो अवदेसो । णं भवं राआ । णीवारछट्ठ-भाअं तावसा अम्हाणं उवहरन्तु त्ति ।

---

तथोक्तः । तया शकुन्तलया न विवृतः न प्रकटीकृतः, न संवृतश्च न पिहितश्च । किं नु खलु सा दृष्टमात्रस्यैव तवाङ्कमारोहति । शालीनतया जातो भावोऽभिलाषः भूयिष्ठं बहुतमम् आविष्कृतः प्रकाशितः । कथमाविष्कृत इत्याकाङ्क्षायां तत्प्रकारमाह—**दर्भाङ्कुरेणेति** ॥ शाखास्विति बहुवचना-द्गम्यमानेन वासःसंकल्पनाबाहुल्येन बहुशो भावाविष्करणं गम्यते । यद्येवं गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति पश्यामि । पथि साधु पाथेयम् । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ्प्रत्ययः । गृहीतं पाथेयं येन स तथोक्तः । गृहीतपाथेयो भवेत्यनेन शकुन्तलासमागमाय संनद्धो भवे-त्ययमर्थो गम्यते । **सखे कैश्चिदित्यादि** ॥ सकृदपि एकवारमपीत्यर्थः ।

कोऽपरोऽपदेशः । ननु भवान्राजा । नीवारषष्ठभागं तापसा अस्माकमुपहरन्त्विति ।

**राजा**—मूर्ख, अन्यद्भागधेयमेतेषां रक्षणे निपतति, यद्रत्नराशीनपि विहायाभिनन्द्यम् । पश्य ।

> **यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।**
> **तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥**

(नेपथ्ये)

हन्त, सिद्धार्थौ स्वः ।

**राजा**—(कर्णं दत्त्वा) अये, धीरप्रशान्तः स्वरः । तपस्विभिर्भवितव्यम् ।

(प्रविश्य)

**दौवारिकः**—जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा ।

जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतिहारभूमिमुपस्थितौ ।

**राजा**—तेन ह्यविलम्बितं प्रवेशय तौ ।

**दौवारिकः**—अअं पवेसेमि ।  अयं प्रवेशयामि ।

(इति निष्क्रम्य ऋषिकुमाराभ्यां सह प्रविश्य)

---

कोऽपरोऽपदेशः । भवान् ननु राजा । नीवारषड्भागं तापसा अस्माकमुपहरन्त्विति । **यदुत्तिष्ठतीति** ॥ वर्णेभ्यो ब्राह्मणादिभ्य उत्तिष्ठति उदेति । क्षयि क्षयशीलम् । जिदृक्षीत्यादिना इनिः । क्षय्यं क्षेतुं शक्यं, न क्षय्यम् अक्षय्यम् । 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्साधुः । नः तपःषड्भागं तपसः षष्ठो भागो षड्भागः । **नेपथ्य इत्यादि** ॥ हन्त हर्षे । सिद्धार्थौ स्वः । कृतार्थौ भवावः । अनयोः कृतार्थत्वं राज्ञस्तपोवनस्थितेरिति मन्तव्यम् । जयतु भवान् । एतौ खलु द्वावृषिकुमारौ प्रतिहारभूमिमुपस्थितौ । अयं प्रवेशयामि ।

इदो इदो भवन्तौ । इत इतो भवन्तौ ।

(उभौ राजानं विलोकयतः ।)

**प्रथमः**—अहो दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुषः । अथ वोपपन्नमेतदृषिभ्यो नातिभिन्ने राजनि । कुतः ।

**अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये**
**रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।**
**अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥१४॥**

**द्वितीयः**—गौतम, अयं स बलभित्सखो दुष्यन्तः ।

**प्रथमः**—अथ किम् ।

**द्वितीयः**—तेन हि—

**नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-**
**मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।**
**आशंसन्ते सुरयुवतयस्त्यक्तभोगा हि दैत्यै-**
**रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १५ ॥**

---

इत इतो भवन्तौ । नातिभिन्ने नातिपृथग्भूते सदृश इत्यर्थः । कुत इति प्रश्ने । **अध्याक्रान्तेति** ॥ सर्वभोग्ये सर्वेषामुपभोगार्हे आश्रमे धर्माचरणस्थाने अमुनाप्यनेनापि वसतिः स्थितिः अध्याक्रान्ता स्वीकृता । रक्षायोगात् प्रजापालनसंबन्धात् तपः संचिनोति । तथा चोक्तं विज्ञानेश्वरेण—अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्म इति । केवलमेवार्थे । शेषं स्पष्टम् । **नैतच्चित्रमिति** ॥ भुनक्ति रक्षति । सुरयुवतयो दैत्यैर्हेतुना त्यक्तभोगा विसृष्टसुखाः सत्यः । अधिगता ज्या येन तत् अधिज्यं तस्मिन् धनुषि पौरुहूते वज्रे विजयमाशंसन्ते ।

**उभौ**—(उपगम्य) विजयस्व राजन् ।

**राजा**—(आसनादुत्थाय) अभिवादये भवन्तौ ।

**उभौ**—स्वस्ति भवते । (इति फलान्युपहरतः ।)

**राजा**—(सप्रणामं परिगृह्य) आज्ञापयितुमिच्छामि ।

**उभौ**—विदितो भवानाश्रमसदामिहस्थः । तेन भवन्तं प्रार्थयन्ते ।

**राजा**—किमाज्ञापयन्ति ।

**उभौ**—तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

**राजा**—अनुगृहीतोऽस्मि ।

**विदूषकः**—(अपवार्य) इअं दाणिं दे अणुऊलअरा अब्भत्थणा ।
(अपवार्य) इयमिदानीं तेऽनुकूलतराभ्यर्थना ।

**राजा**—(स्मितं कृत्वा) रैवतक, मद्वचनादुच्यतां सारथिः—सबाणासनं रथमुपस्थापयेति ।

**दौवारिकः**—जं देवो आणवेदि । यद्देव आज्ञापयति ।

(इति निष्क्रान्तः ।)

---

इच्छन्ति । 'आङः शासु इच्छायाम्' इत्यात्मनेपदम् । उपहरतः समर्पयतः । आज्ञापयितुं आज्ञां प्रयोजयितुम् इच्छामि । भवत्कर्तृकामाज्ञापनामिच्छामीत्यर्थः । भवान् आश्रमवासिनां विदितः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । इहस्थः अत्रस्थः । 'सुपि स्थः' इति कप्रत्ययः । तेन कारणेन प्रार्थयन्ते । आश्रमवासिन इति शेषः । असांनिध्यात् असंनिधानादित्यर्थः । कतिपयरात्रं 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इत्यच्प्रत्ययः समासान्तः । इयमिदानीमनुकूलतरा प्रेरणा । उपस्थापय उपस्थितं कुरु ।

**उभौ**—(सहर्षं)

**अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।**
**आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १६ ॥**

**राजा**—(सप्रणामं) गच्छतां पुरो भवन्तौ । अहमप्यनुपदमागत एव ।

**उभौ**—विजयस्व । (इति निष्क्रान्तौ ।)

**राजा**—माढव्य, अप्यस्ति शकुन्तलादर्शने कुतूहलम् ।

**विदूषकः**—पढमं सपरिवाहं आसि । दाणिं रक्खसवुत्तन्तेण बिन्दूवि णावसेसिदो ।

प्रथमं सपरिवाहमासीत् । इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः ।

**राजा**—मा भैषीः । ननु मत्समीपे वर्तिष्यसे ।

**विदूषकः**—एसो रक्खसादो रक्खिदो म्हि ।

एष राक्षसाद्रक्षितोऽस्मि ।

(प्रविश्य)

**दौवारिकः**—सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि । एस उण णअरादो देवीणं आणत्तिहरो करभओ उवट्ठिदो ।

सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक उपस्थितः ।

---

यद्देव आज्ञापयति । **अनुकारिणीति** ॥ स्पष्टोऽर्थः । अनुपदमन्वक् आगत एव । अनुपदमिति नपुंसकमव्ययम् । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः । प्रथमं सपरिवाहमासीत् । इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः । एवं यदि राक्षसेभ्यो रक्षितोऽस्मि । सज्जितो रथः भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिकरः करभक उपस्थितः ।

**राजा**—(सादरं) किमम्बाभिः प्रेषितः ।

**दौवारिकः**—अह इं । अथ किम् ।

**राजा**—ननु प्रवेश्यताम् ।

**दौवारिकः**—तह । तथा ।

(इति निष्क्रम्य करभकेण सह प्रविश्य ।)

एसो भट्टा । उवसप्प । एष भर्ता । उपसर्प ।

**करभकः**—जेदु भट्टा । देवी आणवेदि—आआमिणि चउत्थे दिअहे णिव्वुत्तपालणो मे उववासो भविस्सदि । तहिं दीहाउणा अवस्सं संणिहिदेण होदव्वं त्ति ।

जयतु भर्ता । देव्याज्ञापयति—आगामिनि चतुर्थे दिवसे निर्वृत्तपारणो मे उपवासो भविष्यति । तत्र दीर्घायुषावश्यं संनिहितेन भवितव्यमिति ।

**राजा**—इतस्तपस्विकार्यम् । इतो गुरुजनाज्ञा । द्वयमप्यनतिक्रमणीयम् । किमत्र प्रतिविधेयम् ।

**विदूषकः**—तिसङ्कू विअ अन्तराले चिट्ठ ।

त्रिशङ्कुरिवान्तराले तिष्ठ ।

**राजा**—कृतं परिहासेन । सत्यमाकुलीभूतोऽस्मि ।

---

एष भर्ता। उपसर्पतु भवान् । जयतु जयतु भर्ता । देव्याज्ञापयति—आगामिनि चतुर्थे दिवसे निर्वृत्तपारण उपवासो मे भविष्यति । तस्मिन् दीर्घायुषाऽवश्यं संनिहितेन भवितव्यमिति । अनेन ज्येष्ठमासे पूर्णिमायां कर्तव्यं तटाकसावित्रीव्रतं गम्यते । तदुक्तं स्कन्दपुराणे—'त्रिरात्रं लङ्घयित्वा तु चतुर्थे दिवसे ह्यहम्' इत्यादि । **किमत्रेति ॥** अत्र विप्रतिषेधे कार्यद्वये प्रतिविधातव्यं कर्म किमस्ति । किमिति प्रतिविधातव्यविशेषप्रश्ने । त्रिशङ्कुरिव अन्तराले तिष्ठ। कृतं

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ १७ ॥

(विचिन्त्य) सखे, त्वमम्बया पुत्र इति प्रतिगृहीतः । अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ।

**विदूषकः**—मा क्खु मं रक्खोभीरुअं गणेसि ।

मा खलु मां रक्षोभीरुं गणयसि ।

**राजा**—(सस्मितं) कथमेतद्भवति संभाव्यते ।

**विदूषकः**—तेण हि जह राआणुएण गन्तव्वं तह गच्छामि ।

तेन हि यथा राजानुजेन गन्तव्यं तथा गच्छामि ।

**राजा**—ननु तपोवनोपरोधः परिहरणीय इति सर्वानानुयात्रिकांस्त्वयैव सह प्रस्थापयामि ।

**विदूषकः**—तेण हि जुवराओ म्हि दाणिं संवुत्तो ।

तेन हि युवराजोऽस्मीदानीं संवृत्तः ।

**राजा**—(स्वगतं) चपलोऽयं वटुः । कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत् । भवतु । एनमेवं वक्ष्ये । (विदूषकं हस्ते गृहीत्वा प्रकाशं) वयस्य, ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः । पश्य ।

---

परिहासेन । 'युगपर्याप्तयोः कृतम्' इत्यमरः। **कृत्ययोर्भिन्नेत्यादिना** ॥ द्वैधीभवति द्विधा भवति । स्रोतोवहं नदीसंबन्धि । स्रोतः प्रवाहः । मा खलु मां राक्षसभीरुं गणय । तेन हि यथा राजानुजेन गन्तव्यं तथा गच्छामि । तेन हि युवराज इदानीमस्मि संवृत्तः । **चपलोऽयमिति** ॥ अस्मत्प्रार्थनामस्मदभिलाषम् । अन्तःपुरेभ्यः अन्तःपुरवासिनीभ्यः । कदाचित् कथयेत् । यदा कदा

**क्व वयं क्व परोक्षमन्मथो मृगशावैः सममेधितो जनः ।**
**परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः ॥१८॥**

**विदूषकः**—अह इं । अथकिम् ।

(इति निष्क्रान्ताः सर्वे ।)

**॥ इति द्वितीयोऽङ्कः ॥**

वा शंसेत् । अत्र करभकागमनेन वस्तुविच्छेदे सति प्रसञ्जितेयं प्रार्थना उत्तराङ्कवस्तुहेतुत्वाद्विन्दुरित्यनुसंधेयम् । 'अङ्को बीजबिन्दुसमन्वितः' इत्युक्तेः । एवमित्थमनेन प्रकारेण तापसकन्यकायामभिलाषोऽनुरागः न खलु नास्ति हि । सत्यं तथ्यं निश्चय इत्यर्थः । अत्र सत्यशब्दो न शपथवाची । 'सत्यं शपथ-तथ्ययोः' इत्यमरः । तदेवोपपादयति—**क्व वयमिति** ॥ वयं नागराः क्व । वक्ष्यमाणस्य मूढस्य आरण्यजनस्य प्रतियोगितया अस्य नागरिकत्वं गम्यते । परोक्षः अप्रत्यक्षः, अज्ञात इत्यर्थः, मन्मथः कामः यस्य स तथोक्तः । मृगशावैः समं साकं एधितः प्रवृद्धो जनः क्व । अत्र दैन्यकथनेन नागरिकारण्य-जनयोः संबन्धो नोपपद्यत इति भावः । अतः कारणात् सखे वयस्य परि-हासविजल्पितं हास्यभाषितमिदं वचः परमार्थेन न गृह्यतां न मन्यताम् । **अथ** किम् । अत्र नर्मद्युतिर्नाम संध्यङ्गमुक्तम् । 'दोषप्रच्छादनार्थं तु वचो नर्म-द्युतिर्मता' इति । अत्र देवीव्रतरूपस्य अन्तरार्थस्य कथनं राज्ञः सकाशा-द्विदूषकापकर्षणार्थम् । अपकर्षणं च शकुन्तलां विस्मरिष्यतो राज्ञः प्रतिबोधो मा भूदिति कविना प्रयुक्तमिति मन्तव्यम् । इति निष्क्रान्ताः सर्वे ॥

॥ इति द्वितीयोऽङ्कः ॥

---

# ॥ तृतीयोऽङ्कः ॥

(ततः प्रविशति कुशानादाय यजमानशिष्यः ।)

शिष्यः—अहो, महाप्रभावः पार्थिवो दुष्यन्तः । यत्प्रविष्टमात्र एवाश्रमं तत्रभवति राजनि, निरुपप्लवानि नः कर्माणि संवृत्तानि ।

**का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।**
**हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥**

यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपनयामि । (परिक्रम्यावलोक्य च । आकाशे लक्ष्यं बद्ध्वा) प्रियंवदे, कस्येदमुशीरानुलेपनं मृणालवन्ति च नालिनीपत्राणि नीयन्ते । (श्रुतिमभिनीय) किं ब्रवीषि । आतपलङ्घनाद्बलवदस्वस्था शकुन्तला, तस्याः शरीरनिर्वापणायेति । तर्हि यत्नादुपक्रम्यताम् । सा खलु

---

॥ अथ तृतीयोऽङ्कः ॥

अथ कथासंघटनार्थं कविः विष्कम्भकं नाम अर्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीति** ॥ यत् यस्मात्कारणात् । आश्रमं प्रविष्टमात्रे एतस्मिन् पार्थिवे निरुपप्लवानि निर्विघ्नानि । **का कथेत्यादि** ॥ स्पष्टम् । स्वागमनप्रयोजनं निवेदयति—**यावदिमानित्यादि** ॥ उशीरानुलेपनं नलदाङ्गरागः । मृणालवन्ति समृणालानि कस्य नीयन्ते । किं ब्रवीषि किमात्थ । आतपलङ्घनात् आतपाक्रमणात् बलवत् सुष्ठु । 'बलवत्सुष्ठु किमुत' इत्यमरः । अस्वस्था पीडिता । शरीरनिर्वापणाय शरीरस्य आह्लादनाय । तर्हि तथा चेत् । यत्नादुपक्रम्यतां यत्नेन

भगवतः कुलपतेरुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि ।

(इति निष्क्रान्तः ।)

विष्कम्भकः ।

(ततः प्रविशति कामयमानावस्थो राजा ।)

**राजा**—(निःश्वस्य)

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥ २ ॥

(मदनबाधां निरूप्य) भगवन्कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः ।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।

---

चिकित्स्यताम् । कुलपतेः कण्वस्य उच्छ्वसितं जीवितम् । वैतानिकं वितानो यागः तत्संबन्धि वैतानिकम् । गौतमी नाम कण्वस्य भगिनी । तस्या हस्ते अस्यै शकुन्तलायै विसर्जयिष्यामि दास्यामि । अत्राकाशे लक्ष्यं बद्ध्वेत्यादिना प्रतिपादितो योऽर्थः सोऽप्रविष्टया प्रियंवदया सह आलापादाकाशभाषितमिति मन्तव्यम् । यथोक्तम्—'अप्रविष्टैर्य आलापः स एवाकाशभाषितम् । एष प्रयोज्य आकाशे लक्ष्यं बद्ध्वेत्यनन्तरम् । किमात्थेति वचोऽनूद्य पश्चात्कार्यं तदुत्तरम् ॥' इति । एष विष्कम्भः ॥

कामयमानः प्रार्थयमानः सोत्कण्ठ इत्यर्थः । **जान इत्यादि** ॥ सा बाला शकुन्तला परवती पित्रधीनेति विदितं ज्ञातम् । तपसो वीर्यं जान इत्यनेन स्वयंग्रहो न शक्य इति गम्यते । परवतीत्यनेन तस्या अभिसरणं न सिध्यतीत्यवगम्यते । अनेन गम्यमानोऽभिलाषः अत्राङ्के बीजमित्यनुसंधेयम् ।

विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ३ ॥

(परिक्रम्य) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातावश्रमः क्लान्तमात्मानं विनोदयामि । (निःश्वस्य) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । (सूर्यमवलोक्य) इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि । (परिक्रम्य संस्पर्शं रूपयित्वा) अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ४ ॥

---

**भगवन्निति** ॥ अतिसंधीयते वञ्च्यते । **तव कुसुमेति** ॥ स्पष्टः । भगवन्नित्यादिना वज्रसारीकरोषीत्यन्तेन निष्ठुरभाषणेन वज्रमिति संध्यङ्गमुक्तम् । 'वज्रं प्रत्यक्षनिष्ठुरम्' इत्युक्तेः । **क्व नु खल्विति** ॥ कर्मणि संस्थिते समाप्ते सति । अनुज्ञातविश्रमः अनुज्ञातः अनुमतः विश्रमो विश्रान्तिः यस्य स तथोक्तः । प्रियादर्शनादृते शकुन्तलावलोकनं विना अन्यच्छरणं किं नु खलु न किमपीत्यर्थः । अत्र क्रियाद्वेषो नाम पञ्चमावस्था गम्यते । 'क्रियाद्वेषो मतोऽन्यत्र विद्वेषो भोग्यवस्तुषु' इत्युक्तेः । अन्विष्यामि मृगये । क्व नु खल्वित्यादिना अत्रैव तावदहं गच्छामीत्यन्तेन पूर्वदृष्टायाः पश्चाददृष्टायाः शकुन्तलाया अन्वेषणात्परिसर्पो नाम संध्यङ्गमुक्तम् । 'परिसर्प इति प्राहुर्दृष्टवस्त्वनुसर्पणम्' इति । **प्रवातसुभग इति** ॥ अत्र वातस्य प्रकृष्टता शैत्यादिगुणवत्त्वेन, न तु बाहुल्येन । उद्देशः स्थानम् । **शक्यमिति** ॥ अनङ्गतप्तैः अङ्गैः अविरलं गाढं पवनः आलिङ्गितुं शक्यम् । अत्र शक्यमित्यव्ययम् । अन्यथा शक्य इति स्यात् । तथा चोक्तं रामायणे—'शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः ।' इति । तत्र परितापस्य प्रतीतेर्विधूतं नाम संध्यङ्गमुक्तम् । 'विधूतमार्तिः' इति ।

(परिक्रम्यावलोक्य च।) अस्मिन्वेतसपरिक्षिप्ते लतामण्टपे संनिहितया तया भवितव्यम्। तथाहि। (अधो विलोक्य)

**अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।**
**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा॥ ५॥**

यावद्विटपान्तरेणावलोकयामि। (परिक्रम्य तथा कृत्वा सहर्षं) अये, लब्धं नेत्रनिर्वाणम्। एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते। भवतु। श्रोष्याम्यासां विस्रम्भकथितानि। (इति विलोकयन्स्थितः।)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला।)

**सख्यौ**—(उपवीज्य सस्नेहं) हला सउन्दले, अवि सुहस्स दे णलिणीपत्तवादो।

(उपवीज्य सस्नेहं) हला शकुन्तले, अपि सुखाय ते नलिनीपत्रवातः।

**शकुन्तला**—किं वीअअन्ति मं सहीओ।

किं वीजयतो मां सख्यौ।

(सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः।)

**राजा**—बलवदस्वस्थशरीरा शकुन्तला दृश्यते। (सवितर्कं) तत्किमयमातपदोषः स्यात्, उत यथा मे मनसि वर्तते। (साभिलाषं निर्वर्ण्य) अथवा कृतं संदेहेन।

---

**अभ्युन्नतेति**॥ स्पष्टः। अये इति वाक्यालंकारभूतमामन्त्रणम्। नेत्रनिर्वाणं नयनानन्दः। लब्धं प्राप्तम्। **यदेषेत्यादि**॥ मनोरथेन प्रियतमा न तु परिग्रहादिना। सखि शकुन्तले अपि सुखाय ते नलिनीपत्रवातः। सुखायेत्यत्र तादर्थ्ये ङेस्त्विति विकल्पेन चतुर्थी। किं वीजयथो मां सख्यौ। अत्र तापो नाम षष्ठावस्था सूचिता। पूर्वमनुक्तोऽपि शकुन्तलायाः संकल्पगुणनुतिक्रियासु

**स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं**
**प्रियायाः साबाधं किमपि कमनीयं वपुरिदम् ।**
**समस्तापः कामं मनसिजनिदाघप्रसरयो-**
**र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ९ ॥**

**प्रियंवदा**—(जनान्तिकं) अणसूए, तस्स राएसिणो पढमदंसणादो आरहिअ पज्जुस्सुआ विअ सउन्दला । किंणु क्खु से तण्णिमित्तो एव्व अअं आतंको भवे ।

(जनान्तिकं) अनसूये, तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खल्वस्यास्तन्निमित्त एवायमातङ्को भवेत् ।

**अनसूया**—सहि, ममवि ईदिसी आसङ्का हिअअस्स । होदु । पुच्छिस्सं दाव णं । (प्रकाशं) सहि, पुच्छिदव्वासि किंपि । बलवं क्खु दे संदावो ।

---

द्वेष एवेत्यनुसंधेयम् । अवस्थानां क्रमाभावात् । **स्तनन्यस्तोशीरमिति** ॥ स्तनयोः न्यस्तं औशीरं उशीरसंबन्ध्यनुलेपनं यस्य तत्तथोक्तम् । मृणालान्येव एकानि मुख्यानि वलयानि, प्रशिथिलानि तापेन क्लान्तानि मृणालैकवलयानि यस्य तत्तथोक्तम् । प्रियाया इदं वपुः साबाधं सव्यथं सत् अधिकरमणीयम् । मनसिजनिदाघप्रसरयोः मन्मथग्रीष्मयोः प्रसरौ प्रचारौ ययोः सतोः । तापः काममत्यर्थं समः सदृशः । मनसिजकृत एवेति निर्णेतुमशक्य इत्यर्थः । तथापि ग्रीष्मस्यापराद्धं तु अपराधस्तु । 'नपुंसके भावे क्तः' इति क्तप्रत्ययः । युवतिषु एवं दृश्यमानप्रकारेणेत्यर्थः । सुभगं हृद्यं न भवति । सुभगत्वान्मदनदोष एवायमित्यभिप्रायः । अनेन वाक्येन उत्कर्षस्य गम्यमानत्वात्पुष्पमिति संध्यङ्गमुक्तं भवति । 'पुष्पं विशेषवद्वाक्यम्' इति । अनसूये तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुका आपन्नेव शकुन्तला । किं नु खल्वस्यास्तन्निमित्त एवायमातङ्को

सखि, ममापीदृश्याशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनाम् ।
(प्रकाशं) सखि, प्रष्टव्यासि किमपि । बलवान्खलु ते संतापः ।

**शकुन्तला**—(पूर्वार्धेन शयनादुत्थाय)

हला, किं वत्तुकामासि ।  हला, किं वक्तुकामासि ।

**अनसूया**—हला सउन्दले, अणब्भन्तरा क्खु अम्हे मदणगदस्स वुत्तन्तस्स । किंदु जादिसी इदिहासणिबन्धणेसु कामअमाणाणं समवत्था सुणीअदि तादिसिं दे पेक्खामि । कहेहि किंणिमित्तो अअं संदावो । विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ।

हला शकुन्तले, अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशीतिहासनिबन्धनेषु कामयमानानां समवस्था श्रूयते तादृशीं ते पश्यामि । कथय किंनिमित्तोऽयं संतापः । विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य ।

**राजा**— अनसूयामप्यनुगतो मदीयस्तर्कः ।

**शकुन्तला**—(आत्मगतं) बलवं क्खु मे अहिणिवेसो । एदाणं वि सहसा ण सक्कुणोमि णिवेदिदुं ।

(आत्मगतं) बलवान्खलु मेऽभिनिवेशः । एतयोरपि सहसा न शक्नोमि निवेदयितुम् ।

---

भवेत् । सखि ममापि खल्वीदृश्याशङ्का हृदयस्य । भवतु प्रक्ष्यामि तावदेनाम् । सखि प्रष्टव्यासि । किमपि बलवत् खलु ते संतापः । सखि किं वक्तुकामासि । सखि शकुन्तले अभ्यन्तराः खलु वयं मनोगतवृत्तान्तस्य । किं तु यादृशीं इतिहासनिबन्धनेषु कामयमानानां समवस्था श्रूयते तादृशीं ते पश्यामि । कथय कथय । किंनिमित्तोऽयं संतापः । विकारं परमार्थतोऽज्ञात्वा अनारम्भः खलु प्रतीकारस्य । बलवान् खलु मेऽभिनिवेशः । एतयोरपि सहसा न शक्नोमि

**प्रियंवदा**—सहि, सुट्ठु एसा भणादि। किं अत्तणो आतंकं उवेक्खसि। अणुदिअहं क्खु परिहीअसि अङ्गेहिं। केवलं लावण्णमई छाआ तुमं ण मुञ्चदि।

सखि, सुष्ठ्वेषा भणति। किमात्मन आतङ्कमुपेक्षसे। अनुदिवसं खलु परिहीयसेऽङ्गैः। केवलं लावण्यमयी छाया त्वां न मुञ्चति।

**राजा**—अवितथमाह प्रियंवदा। तथा हि।

**क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं**
**मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा।**
**शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते**
**पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी॥७॥**

**शकुन्तला**—सहि, कस्स वा अण्णस्स कहइस्सं। किंदु आआसइत्तिआ दाणिं वो भविस्सं।

सखि, कस्य वान्यस्य कथयिष्यामि। किंत्वायासयितृकेदानीं वां भविष्यामि।

**उभे**—अदो एव्व णिब्बन्धो। सिणिद्धजणसंविभत्तं खु दुक्खं सज्झवेदणं होदि।

अत एव निर्बन्धः। स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति।

---

निवेदयितुम्। सखि सुष्ठु एषा भणति। किमात्मनः आतङ्कमुपेक्षसे। अनुदिनं परिहीयसेऽङ्गैः। केवलं लावण्यमयी छाया त्वां न मुञ्चति। **क्षामेति**॥ पत्राणां शोषणेन शोषकेण मरुता ग्रीष्मवायुनेत्यर्थः। कस्यान्यस्य कथयितव्यम्। किंत्वायासयितृकेदानीं भविष्यामि। अत एव निर्बन्धः। सुविभक्तं खलु

राजा— पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ८ ॥

शकुन्तला—सहि, जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा राएसी, तदो आरहिअ तग्गदेण अहिलासेण एतदवत्थम्हि संवुत्ता ।

सखि, यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः, तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता ।

राजा—(सहर्षं) श्रुतं श्रोतव्यम् ।
स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ ९ ॥

शकुन्तला—तं जइ वो अणुमदं तह वट्टह जह तस्स राएसिणो अणुकम्पणिज्जा होमि । अण्णहा अवस्सं सिञ्चह मे तिलोदअं ।

---

सद्यवेदनं भवति । **पृष्टेति** ॥ अत्रान्तरे अस्मिन्नवसरे । श्रवणकातरतां श्रवणे वाक्याकर्णने कातरतां गतोऽस्मि । अत्र शकुन्तला स्वकीयं संतापं मदनदोषजमिति कथयति आतपदोषजमिति कथयति किमिति राज्ञो भीरुत्वमिति मन्तव्यम् । सखि यतः प्रभृति मम दर्शनपथमागतस्तपोवनरक्षिता राजर्षिः अत आरभ्य तद्गतेनाभिलाषेण एतदवस्थास्मि संवृत्ता । तपात्यये ग्रीष्मान्ते । अभ्रश्यामः अभ्रैः श्यामः कृष्णः दिवस इव । वर्षाकाले दिवसस्य वर्षणात्पूर्वमूष्मलत्वात्तापकरत्वं, वर्षणे सति निर्वापयितृत्वमिति भावः । तथा च रत्नावल्यां—'तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः' इति । अत्रार्तेः शान्तत्वात् शम इति संध्यङ्गमुक्तम् । तथोक्तं—'तच्छान्तिः शम

तद्यदि वामनुमतं तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथावश्यं सिञ्चतं मे तिलोदकम् ।

**राजा**—विमर्शच्छेदि वचनम् ।

**प्रियंवदा**—(जनान्तिकं) अणसूए दूरगअमम्महा अक्खमा इअं कालहरणस्स । जस्सिं बद्धभावा एसा सो ललामभूदो पोरवाणं । ता जुत्तं से अहिळासो अहिणन्दिदुं ।

(जनान्तिकं) अनसूये, दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ।

**अनसूया**—तह जह भणासि । (प्रकाशं) सहि, दिट्ठिआ अणुरूवो दे अहिणिवेसो । अहवा साअरं वज्जिअ कहिं वा महाणई ओदरइ ।

तथा यथा भणसि । (प्रकाशं) सखि, दिष्टयानुरूपस्तेऽभिनिवेशः । अथवा सागरं वर्जयित्वा कुत्र वा महानद्यवतरति ।

**प्रियंवदा**—को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लीवदं अरुहदि ।

क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लविताम‌र्हति ।

---

इत्यभिधीयते ।' यदि वामनुमतं तथानुवर्तेथाम् । यथा तस्य राजर्षेरनुकम्पनीया भवामि । अथवा प्रसिञ्चतं मे तिलमिश्रमुदकम् । प्रपूर्वः सिञ्चतिर्निर्वापार्थे । तथा च वक्ष्यते—'नूनं प्रसूतिविकलेन मया प्रसिक्तं पीताश्रुशेषमुदकं पितरः पिबन्ति' इति । विमर्शच्छेदि संशयापनोदि । अनसूये दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन् बद्धभावैषा स ललामभूतः पौरवाणाम् । तस्माद्युक्तमस्या अभिलाषोऽभिनन्दितुम् । सखि तथैव यथा भणसि । सखि दिष्टया तेऽनुरूपोऽभिनिवेशः । अथवा सागरं वर्जयित्वा कस्मिन्वा महानदी अवतरति । क इदानीं सहकारमन्तरेण अतिमुक्तलतां पल्लविता—

**राजा**—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते ।

**अनसूया**—को उण उवाओ भवे जेण अविलम्बिअं णिहुअं अ सहीमणोरहं संपादेम्ह ।

क: पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सखीमनोरथं संपादयावः ।

**प्रियंवदा**—णिहुअंत्ति चिन्ता भवे । सिग्घंत्ति सुअरं ।

निभृतमिति चिन्ता भवेत् । शीघ्रमिति सुकरम् ।

**अनसूया**—कहं विअ । कथमिव ।

**प्रियंवदा**—णं एसो राएसी इमस्सिं सिणिद्धदिट्ठिसूइदाहिळासो इमाइं दिअहाइं पजाअरकिसो लक्खीअदि ।

नन्वेष राजर्षिरस्यां स्निग्धदृष्टिसूचिताभिलाष इमान्दिवसान्प्रजागरकृशो लक्ष्यते ।

**राजा**—सत्यमित्थंभूत एवास्मि । तथाहि ।

**इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं**
**निशि निशि भुजन्यस्तापाङ्गप्रसर्पिभिरश्रुभिः ।**
**अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-**
**त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १० ॥**

---

मर्हति । 'अन्तरान्तरेणयुक्ते' इति द्वितीया । **किमत्रेति** ॥ अनुवर्तेते यदि अनुसरतश्चेत् । कः पुनरुपायो भवेत्, येनाविलम्बितं निभृतं च सखीमनोरथं संपादयावः । निभृतमिति चिन्ता भवेत् । शीघ्रमिति सुकरम् । कथमिव । नन्वेष राजर्षिः अस्यां स्निग्धदृष्टिसूचिताभिनिवेशः इमानि दिवसानि प्रजागरकृशो लक्ष्यते । **इदमिति** ॥ अशिशिरैः उष्णैः । भुजन्यस्तापाङ्गप्रसर्पिभिः भुजे उपधानीभावात् न्यस्तादपाङ्गात् नेत्रान्तात् प्रसर्पन्ति । अत्र तापो नाम षष्ठावस्था सूचिता । तैः विवर्णमणीकृतम् । अनतिलुलिताः

**प्रियंवदा**—(विचिन्त्य) हला, मअणलेहो से करीअदु । तं सुमणोगोविदं करिअ देवदाप्पसादव्ववदेसेण तस्स रण्णो हत्थं पावइस्सं ।

(विचिन्त्य) हला, मदनलेखोऽस्य क्रियताम् । तं सुमनोगोपितं कृत्वा देवताप्रसादव्यपदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि ।

**अनसूया**—रोअइ मे सुउमारो पओओ । किं वा सउन्दला भणादि ।

रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ।

**शकुन्तला**—किं णिओओ वो विकप्पीअदि ।

किं नियोगो वां विकल्प्यते ।

**प्रियंवदा**—तेण हि अत्तणो उवण्णासपुव्वं चिन्तेहि किं वि ललिअपदबन्धणं ।

तेन ह्यात्मन उपन्यासपूर्वं चिन्तय किमपि ललितपदबन्धनम् ।

**शकुन्तला**—हला, चिन्तेमि । किंदु अवहीरणाभीरुअं उण वेवइ मे हिअअं ।

हला, चिन्तयामि । किं तु अवधीरणाभीरुकं पुनर्वेपते मे हृदयम् ।

**राजा**— अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् ।

---

ज्याघातानामङ्काः चिह्नानि यस्य तत्तथोक्तम् । स्रस्तं स्रस्तं पुनः पुनर्गलितम् । कनकवलयं मणिबन्धनात् प्रतिसार्यते अधिरोप्यते । सखि मदनलेखोऽस्य क्रियताम् । तं सुमनोगोपितं कृत्वा देवताप्रसादव्यपदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि । रोचते मे सुकुमारप्रयोगः । किंवा शकुन्तला भणति । किं नियोगो वां विकल्प्यते । तेन ह्यात्मन उपन्यासपूर्वकं चिन्तय किमपि ललित-पदबन्धनम् । सखि चिन्तयामि । किंत्ववधीरणाभीरुकं पुनर्वेपते मे

लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ ११ ॥

**सख्यौ**—अइ अत्तगुणावमाणिणि, को दाणिं सरीरणिव्वावइत्तिअं सारदिं जोसिणिं पडंतेण णिवारइस्सदि ।

अयि आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन निवारयिष्यति ।

**शकुन्तला**—(सस्मितं) णिओइदा दाणिं ह्मि । नियोजितेदानीमस्मि ।

(इत्युपविष्टा चिन्तयति ।)

**राजा**—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः ।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १२ ॥

**शकुन्तला**—हला, चिन्दिदा मए गीदी । ण क्खु सण्णिहिदाइ लेहणसाहणाइ ।

हला, चिन्तिता मया गीतिः । न खलु संनिहितानि लेखनसाधनानि ।

**प्रियंवदा**—इमस्सिं सुओदरसुउमारे णलिणीपत्ते णहेहिं णिक्खित्तवण्णं करेहि ।

अस्मिञ्छुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णां कुरु ।

---

हृदयम् । **अयं स त इति** ॥ स्पष्टः । अयि आत्मगुणावमानिनि क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन निवारयिष्यति । नियोजितेदानीमस्मि । **उन्नमितेति** ॥ स्पष्टम् । सख्यौ चिन्तिता मया गृहीतवस्तुका गीतिका । न खलु संनिहितानि लेखनसाधनानि । अस्मिन् शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णां कुरु । गीतिकामिति शेषः । सख्यौ

**शकुन्तला**—(यथोक्तं रूपयित्वा)

हला, सुणुह दाव—एसा संगदत्था ण वेत्ति।

सख्यौ, शृणुतं तावत्—एषा संगतार्था न वेति।

**उभे**—अवहिद म्ह। अवहिते स्वः।

**शकुन्तला**—(वाचयति)

**तुज्झ ण जाणे हिअअं मह उण मअणो दिवा वि रत्तिं वि।**
**णिग्घिण तवइ बलीअं तुइ जुत्तमणोरहाइ अङ्गाइं॥ १३॥**

तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रिमपि।
निर्घृण तपति बलवत्त्वयि युक्तमनोरथान्यङ्गानि॥

**राजा**—(सहसोपसृत्य)

**तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव।**
**ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः॥ १४॥**

**सख्यौ**—(सहर्षं) साअदं दे अविलम्बिणो सहीमणोरहस्स

(सहर्षं) स्वागतं ते अविलम्बिनः सखीमनोरथस्य

(शकुन्तलाभ्युत्थातुमिच्छति।)

**राजा**—अलमलमायासेन।

**संदष्टकुसुमशयनान्याशुक्लान्तबिसभङ्गसुरभीणि।**
**गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति॥ १५॥**

---

शृणुतं तावत्। एषा संगतार्था न वेति। अवहिते स्वः। तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रिमपि। निर्घृण तापयति बलवत्त्वयि युक्तमनोरथान्यङ्गानि। अनेनोपन्यासः संध्यङ्गमुक्तम्। 'उपपत्तियुतं वाक्यमुपन्यासं प्रचक्षते' इति। अत्र दीनोक्त्या मानत्यागो नाम सप्तमावस्था सूचिता। **तपतीति**॥ स्पष्टः। स्वागतं ते अविलम्बिनः सखीमनोरथस्य। अत्र तद्वियोगाद्राजा लक्ष्यते। **संदष्टेति**॥ स्पष्टम्। अनेन सान्त्वनस्य गम्यमानत्वात् पर्युपासनमिति

**अनसूया**—इदो सिलातलेक्कदेसं अलंकरेदु वअस्सो ।

इतः शिलातलैकदेशमलंकरोतु वयस्यः ।

(राजोपविशति । शकुन्तला सलज्जा तिष्ठति ।)

**अनसूया**—दुवेणं वि वो अण्णोण्णाणुराओ पच्चक्खो । सहीसिणेहो मं पुणरुत्तवादिणिं करेदि ।

द्वयोरपि वामन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहो मां पुनरुक्तवादिनीं करोति ।

**राजा**—भद्रे, नैतत्परिहार्यम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

**अनसूया**—आवण्णस्स विसअवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं त्ति णं एसो वो धम्मो ।

आपन्नस्य विषयवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमिति नन्वेष वो धर्मः ।

**राजा**—नास्मात्परम् ।

**अनसूया**—तेण हि इअं णो पिअसही तुमं एव्व उद्दिसिअ इमं अवत्थन्तरं भअवदा मअणेण आरोविदा । ता अरुहासि अब्भुववत्तीए जीविदं से अवलम्बिदुं ।

तेन हीयं नः प्रियसखी त्वामेवोद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम् ।

---

संध्यङ्गमुक्तम् । सान्त्वनं पर्युपासनमिति । इतः शिलातलैकदेश उपविश्यानुगृह्णातु वयस्यः । द्वयोरपि वामन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहो मां पुनरुक्तवादिनीं करोति । अवश्यमापन्नस्य विषयवासिनो जनस्य आर्तिहरेण राज्ञा भवितव्यमिति नन्वेष वो धर्मः । तेन हीयं नः प्रियसखी त्वामेवोद्दिश्य इममवस्थान्तरं भगवता मदनेनारोपिता । तस्मादर्हस्यभ्युपपत्त्याऽनुग्रहेणेत्यर्थः । 'अभ्युपपत्तिरनुग्रह' इत्यमरः । जीवित-

**राजा**—भद्रे, साधारणोऽयं प्रणयः । सर्वथानुगृहीतोऽस्मि ।

**शकुन्तला**—(अनसूयां विलोक्य)

हला, अलं अंदेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण ।

हला, अलमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ।

**राजा**— इदमनन्यपरायणमन्यथा
हृदयसंनिहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽस्मि हतः पुनः ॥ १६ ॥

**अनसूया**—वअस्स, बहुवल्लहा राआणो सुणीअन्ति । जह णो पिअसही बन्धुअणसोअणिज्जा ण होइ तह णिव्वहेहि ।

वयस्य, बहुवल्लभा राजानः श्रूयन्ते । यथा नः प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वह ।

**राजा**—भद्रे, किं बहुना ।

**परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।**
**समुद्ररशना चोर्वी सखी च युवयोरियम् ॥ १७ ॥**

---

मस्या अवलम्बितुम् । अयं प्रणयः साधारणः समानः । ममापि जीवितं भवत्सख्या अवलम्बनीयमित्यर्थः । अनुगृहीतः कृपापात्रीकृतः । अत्रौत्सुक्यापरित्यागो नाम सप्तमावस्था सूचिता । 'मानत्यागस्तापहानिरौत्सुक्यातिशयो भवेत्' इत्युक्तेः । सखि, अलमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ॥ **इदमनन्येति** ॥ हृदये संनिहिता संनिकृष्टा स्थितेत्यर्थः । तस्याः संबुद्धिः । अनेन मनोव्यापारं जानासीति गम्यते । अनन्यपरायणं अनन्याश्रयणम् । समर्थयसे यदि प्रतिपादयसे यदि । यस्माद्बहुवल्लभा राजानः श्रूयन्ते । यथा नः प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वहस्व । **परिग्रहेति** ॥ प्रतिष्ठे प्रतिष्ठानिमित्ते । आयुर्घृतमितिवदौपचारिकप्रयोगः ।

**उभे**—णिव्वुद म्ह ।  निर्वृते स्वः ।

**प्रियंवदा**—(सदृष्टिक्षेपं) अणसूए, जह एसो इदो तदो दिण्णदिट्ठी पज्जुस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि । संजोअएम णं ।

(सदृष्टिक्षेपं) अनसूये यथैष इतस्ततो दत्तदृष्टिः पर्युत्सुको मृगपोतको मातरमन्वेषते । एहि । संयोजयाव एनम् ।

(इत्युभे प्रस्थिते ।)

**शकुन्तला**—हला, असरण म्हि । अण्णदरा वो गच्छदु ।

हला, अशरणास्मि । अन्यतरा युवयोर्गच्छतु ।

**उभे**—पुहवीए जो सरणं सो तुह समीवे वट्टइ ।

पृथिव्या यः शरणं स तव समीपे वर्तते ।

(इति निष्क्रान्ते ।)

**शकुन्तला**—कहं गदाओ एव्व ।  कथं गते ।

**राजा**—अलमलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

**किं शीतलैः क्लमविनोदिभिरार्द्रवातान्**
**संचारयामि नलिनीदलतालवृन्तैः ।**
**अङ्के निधाय करभोरु यथासुखं ते**
**संवाहयामि चरणावुत पद्मताम्रौ ॥ १८ ॥**

---

निर्वृते स्वः । अनसूये इतस्ततो दत्तदृष्टिः पर्युत्सुको मृगपोतको मातरमन्वेषते । एहि संयोजयाव एनम् । सख्यौ, अशरणास्मि । अन्यतरा वां गच्छतु । पृथिव्या यः शरणं स तव समीपे वर्तते । कथं गते एव ॥ **किं शीतलैरिति ।** शीतलैः सलिलसंसर्गात् शीतलैः । श्रमविलोपिभिः श्रमच्छेदिभिः । आर्द्राः क्लिन्नाः सशीकरा इत्यर्थः । करभाविव करबहिर्भागाविव ऊरू यस्याः सा

शकुन्तला—ण माणणीएसु अत्ताणं अवराहइस्सं ।

न माननीयेष्वात्मानमपराधयिष्ये ।

( इत्युत्थाय गन्तुमिच्छति । )

राजा—सुन्दरि, अनिर्वाणो दिवसः । इयं ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापेशलैरङ्गैः ॥ १९ ॥

(इति बलादेनां निवर्तयति ।)

शकुन्तला—पोरव, रक्ख विणअं । मअणसंतत्ता वि ण हु अत्तणो पहवामि ।

पौरव, रक्ष विनयम् । मदनसंतप्तापि न खल्वात्मनः प्रभवामि ।

राजा—भीरु, अलं गुरुजनभयेन । दृष्ट्वापि विदितधर्मा तत्रभवान्नात्र दोषं ग्रहीष्यति कुलपतिः । यतः—

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ २० ॥

---

तथोक्ता । 'ऊरूत्तरपदादौपम्ये' इत्यूङ् । 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । संवाहयामि मर्दयामि । 'संवाहनं मर्दनं स्यात्' इत्यमरः । अत्र प्रगमनं नाम संध्यङ्गमुक्तम् ॥ 'यथोत्तरकृतां वाचमाहुः प्रगमनं बुधाः' इति । न माननीयेष्वात्मानमपराधयिष्ये । नापराधिनं करिष्ये । **उत्सृज्येति** ॥ परिबाधापेशलैः विरहव्यथाकृशैरित्यर्थः । उपलक्षणे तृतीया । पौरव रक्ष विनयं सद्वृत्तम् । मदनसंतप्तापि आत्मनो न प्रभवामि । अत्र पौरवग्रहणस्य निरोधाद्विरोधो नाम संध्यङ्गमुक्तम् । 'निरोधो हि विरोधः स्यात्' इति । दृष्टवानपि ज्ञातवानपि । विदितधर्मा विदितः धर्मः येन स तथोक्तः । 'धर्मादनिच् केवलात्' इति समासान्तः । अत्र अस्मिन्प्रसङ्गे । गान्धर्वेण गन्धर्वनाम्ना विवाहेन । परस्परभाषया कृतो विवाहः गन्धर्वविवाहः । तथा चोक्तं—

**शकुन्तला**—अइ मुञ्च दाव । भूओ वि सहीअणं अणुमाणइस्सं ।

अयि मुञ्च तावत् । भूयोऽपि सखीजनमनुमानयिष्ये ।

**राजा**—भवतु । मोक्ष्यामि ।

**शकुन्तला**—कदा । कदा ।

**राजा**—

अपरिक्षतकोमलस्य याव-
त्कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते
सदयं सुन्दरि गृह्यते रसोऽस्य ॥ २१ ॥

(इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला नाट्येन परिहरति ।)

(नेपथ्ये)

चक्कवाअवहुए, आमन्तेहि सहअरं । उवट्ठिआ रअणी ।

चक्रवाकवधु, आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।

**शकुन्तला**—(ससंभ्रमं) पोरव, असंसअं मम सरीरवुत्तन्तो-वलम्भस्स अज्जा गोदमी इदो एव्व आअच्छदि । ता विड-वन्तरिदो होहि ।

(ससंभ्रमं) पौरव, असंशयं मम शरीरवृत्तान्तोपलम्भाय आर्या गौतमीत एवागच्छति । तस्माद्विटपान्तरितो भव ।

---

'गान्धर्वः स च मान्मथ' इति । राजर्षिकन्यकाः । त्वमपि राजर्षेः कौशिकस्य कन्यका । तस्माद्गान्धर्वो विवाहस्तव युक्त इत्यभिप्रायः । भवतु. मुञ्च तावत् । भूयोऽपि सखीजनं मानयिष्ये । **अपरिक्षतेति** । स्पष्टम् । चक्रवाकि आमन्त्रयस्व सहचरम् । उपस्थिता रजनी । इयं शकुन्तलायां गौतम्यागमनसूचकत्वात् चूलिका । 'नेपथ्यान्तःस्थितैः पात्रैश्चूलिकार्थस्य सूचना' इति । पौरव, असंशयं मम शरीरवृत्तान्तोपलम्भाय आर्या गौतमी इत एवा-

**राजा**—तथा । (इत्यात्मानमावृत्य तिष्ठति ।)

(ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च ।)

**सख्यौ**—इदो इदो अज्जा गोदमी । इत इत आर्या गौतमी ।

**गौतमी**—(शकुन्तलामुपेत्य)

जादे, अवि लहुसंदावाइ दे अङ्गाइ ।

जाते, अपि लघुसंतापानि तेऽङ्गानि ।

**शकुन्तला**—अत्थि मे विसेसो । अस्ति मे विशेषः ।

**गौतमी**—इमिणा संतिदब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि । (शिरसि शकुन्तलामभ्युक्ष्य) वच्छे, परिणदो दिअहो । एहि । उडजं एव्व गच्छम्ह ।

अनेन शान्तिदर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । (शिरसि शकुन्तलामभ्युक्ष्य) वत्से, परिणतो दिवसः । एहि, उटजमेव गच्छामः ।

(इति प्रस्थिताः ।)

**शकुन्तला**—(आत्मगतं) हिअअ, पढमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुञ्चसि । साणुसअं विहट्टिअस्स कहं दे संपदि । (पदान्तरे स्थित्वा । प्रकाशं) लदावलअ संदावहारअ, आमन्तेमि तुमं भूओ वि परिभोअस्स ।

---

गच्छति । तस्माद्विटपान्तरितो भव । इत इत आर्या गौतमी । ततः प्रविशतीत्यादिना बहुपात्रसमुच्चयाद्वर्णसंग्रह इति संध्यङ्गमुक्तम् । 'बहुपात्रसमाहारो वर्णसंग्रह' इति । **जात इति** । जाते, अपि लघुसंतापानि तेऽङ्गानि । अद्यास्ति मे विशेषः । अनेन शान्तिदर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । वत्से, परिणतो दिवसः । एह्युटजमेव गच्छामः । हृदय प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि । सानुशयं कृतसंदेहं विकल्पितस्य कथं निर्वृतिर्भविष्यति । सांप्रतं लतावलय संतापहर आमन्त्रये त्वां

(आत्मगतं) हृदय, प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि। सानुशयं विहस्तितस्य कथं ते संप्रति। (पदान्तरे स्थित्वा। प्रकाशं) लतावलय संतापहारक, आमन्त्रये त्वां भूयोऽपि परिभोगाय।

(इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः।)

**राजा**—(पूर्वस्थानमुपेत्य सनिःश्वासं)

अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः। मया हि

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु॥ २२॥

क्व नु खलु संप्रति गच्छामि। अथवा इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि। (सर्वतोऽवलोक्य)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि॥ २३॥

---

भूयोऽपि परिभोगाय। अत्र शकुन्तला लतावलयव्याजेन राजानमामन्त्रयत इत्यभिप्रायः। **मया हीति**। प्रतिषेधाक्षरविक्लवमभिरामं मनोहरं च तत्तथोक्तम्। अंसे विवर्तत इति चलति इति अंसविवर्ति। चुम्बनपरिहारार्थमित्यवगन्तव्यम्। **तस्या इति**॥ स्पष्टम्। अत्र गौतमीकृतेन शकुन्तलानिवर्तनेन वस्तुनो विच्छेदे सति अनन्तरं शकुन्तलाकृतप्रत्यवेक्षणामन्त्रणपुनःसमागमरूपस्य वस्तुनो गम्यमानत्वाद्बिन्दुनिर्देश इत्यभिप्रायः। 'वस्तुनः

(आकाशे)

राजन्,

सायंतने सवनकर्मणि संप्रवृत्ते
　वेदिं हुताशनवतीं परितः प्रयस्ताः ।
छायाश्चरन्ति बहुधा भयमादधानाः
　संध्यापयोदकपिशाः पिशिताशनानाम् ॥ २४ ॥

**राजा**—अयमयमागच्छामि । (इति निष्क्रान्तः ।)

इति तृतीयोऽङ्कः ।

---

सति विच्छेदे बिन्दुरुच्छेदकारणम्' इति ॥ **सायंतन इति** ॥ सवनकर्मणि यागक्रियायां पिशिताशनानां राक्षसानां घृतादिपात्रेषु दृष्टानि प्रतिबिम्बितानि चरन्ति ॥

॥ इति शाकुन्तलव्याख्याने तृतीयोऽङ्कः ॥

# ॥ चतुर्थोऽङ्कः ॥

(ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ ।)

**अनसूया**—हळा पिअंवदे, जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूवभत्तुगामिणी संवुत्तेत्ति णिव्वुदं मे हिअअं, तह वि एदं चिन्तणिज्जं ।

सखि प्रियंवदे, यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तलाऽनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्येतच्चिन्तनीयम् ।

**प्रियंवदा**—कहं विअ । कथमिव ।

**अनसूया**—अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमाअदो इदोगदं वुत्तन्तं सुमरदि वा ण वेत्ति ।

अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति ।

---

## ॥ अथ चतुर्थोऽङ्कः ॥

अथ कविः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—

**ततः प्रविशत इति** ॥ सखि प्रियंवदे यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तला अनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयं, तथाप्येतच्चिन्तनीयम् । कथमिव । अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति न वेति । अत्र निर्वृत्तेन गान्धर्वविवाहविधिरूपेण उपायेन अन्तःपुरासक्तो राजा शकुन्तलां स्मरति वा न वेत्येवंरूपयापायशङ्कया च शकुन्तलादुष्यन्तयोः

**प्रियंवदा**—वीसद्धा होहि । ण तारिसी गुणविरोहिणी आकिदी । किंदु तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।

विस्रब्धा भव । न तादृशी गुणविरोधिन्याकृतिः । किंतु तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

**अनसूया**—जह अहं पेक्खामि, तह तस्स अणुमदं ।

यथाहं पश्यामि, तथा तस्यानुमतम् ।

**प्रियंवदा**—कहं विअ । कथमिव ।

**अनसूया**—गुणवदे कण्णआ पडिवादणिज्जे त्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो ।

गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः । तं यदि दैवमेव सपादयति नन्वप्रयासेन कृतार्थो गुरुजनः ।

**प्रियंवदा**—(पुष्पभाजनं विलोक्य)

सहि, अवइदाइं खु बलिकम्मपज्जत्ताइं कुसुमाइं ।

सखि, अवचितानि खलु बलिकर्मपर्याप्तानि कुसुमानि ।

**अनसूया**—णं सउन्दलाए सोहग्गदेवआ अच्चणीआ ।

ननु शकुन्तलायाः सौभाग्यदेवतार्चनीया ।

---

प्राप्तभोगसंभावनायाः प्रसञ्जितत्वात् प्राप्त्याशा नाम तृतीयावस्था निवेशितेति ध्येयम् । 'उपायापायशङ्काभ्यां प्राप्त्याशा कार्यसंभवः' इति । विस्रब्धा भव । न तादृशी गुणविरोधिनी आकृतिः । किंतु तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति । यथाहं पश्यामि तथा तस्यानुमतम् । कथमिव । गुणवते कन्यका प्रतिपादनीयेत्ययं प्रथमः संकल्पः । तं यदि दैवतमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः । सखि अपचितानि खलु बलिपर्याप्तानि कुसुमा-

**प्रियंवदा**—जुज्जइ । युज्यते । (इति तदेव कर्मारभेते ।)

(नेपथ्ये)

अयमहं भोः ।

**अनसूया**—(कर्णं दत्त्वा) अदिहीणं विअ णिवेदिदं ।

(कर्णं दत्त्वा) अतिथीनामिव निवेदितम् ।

**प्रियंवदा**—णं उडजसंणिहिदा सउन्दला ।

ननूटजसंनिहिता शकुन्तला ।

**अनसूया**—ण उण हिअअसंणिहिदा । न पुनर्हृदयसंनिहिता ।

**प्रियंवदा**—होदु । अलं एत्तिएहिं कुसुमेहिं ।

भवतु । अलमेतावद्भिः कुसुमैः ।

(इति प्रस्थिते ।)

(पुनर्नेपथ्ये ।)

आः अतिथिपरिभाविनि,

**विचिन्तयन्ती यमनन्यमानसा**
**तपोनिधिं वेत्सि न मामुपस्थितम् ।**
**स्मरिष्यति त्वां न स बोधितोऽपि सन्**
**कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥**

---

नि । शकुन्तलायाः सौभाग्यदेवता समभ्यर्चनीया । युज्यते । अतिथीनामिव निवेदितं निवेदनमित्यर्थः । ननु उटजसंनिहिता शकुन्तला, न पुनर्हृदयसंनिहिता । अलमेतावद्भिः कुसुमैः । **विचिन्तयन्तीति** ॥ प्रमत्तः प्रकर्षेण मत्तः । विचिन्तयन्तीयमनन्यमानसेत्यनेन वाक्येन गम्यमानस्य शकुन्तलाभिभवरूपस्य बीजस्य प्राप्त्याशासमन्वयाद्गर्भसंधिरिति मन्तव्यम् । 'स गर्भो दृष्टनष्टस्य यत्र बीजस्य मार्गणम्' इति । ननु प्राप्त्याशासमन्वयाद्गर्भसंधिः । अत्र बीज-

**प्रियंवदा**—हद्धी । तं एव्व संवुत्तं । कस्सिं वि पूआरुहे अवरद्धा सुण्णहिअआ सउन्दला । (पुरोऽवलोक्य) ण हु जस्सिं कस्सिं वि । एसो दुव्वासो सुलहकोवो महेसी । तह अ सविअ चडुलपददुव्वाराए गईए णिवुत्तो । को अण्णो हुदवहादो दहिदुं पहविस्सदि ।

हा धिक् । तदेव संवृत्तम् । कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । (पुरोऽवलोक्य) न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा च शप्त्वा चटुलपददुर्वारया गत्या निवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभविष्यति ।

**अनसूया**—गच्छ । पादेसु पणमिअ णिवत्तेहि णं । जाव अहं अग्घोदअं गेह्णिअ उवसप्पामि ।

गच्छ । पादयोः प्रणम्य निवर्तयैनम् । यावदहमर्घ्योदकं गृहीत्वोपसर्पामि ।

**प्रियंवदा**—तह । तथा । [इति निष्क्रान्ता ।

---

प्राप्त्याशासमन्वयाद्गर्भसंधिरिति कथमुच्यते, पताकासापेक्षत्वादिति चेन्न । तदभावे बीजं वा भवतीति विद्यमानत्वात् । तदुक्तं—'पताकासंभवे बीजं बिन्दुं वा विन्यसेत्सुधीः' इति । अस्याङ्गानि—'अभूताहरणं मार्गो रूपोदाहरणक्रमाः । संग्रहश्चानुमानं च तोटकाधिबले अपि ॥ उद्वेगसंभ्रमाक्षेपा द्वादशाङ्गानि तस्य च ।' अत्र पूर्वमारम्भयत्नौ दुष्यन्तसंबन्धिनो वृत्तान्ताः । कथमिदानीं प्राप्त्याशा शकुन्तलासंबन्धिनीत्युच्यत इति नाशङ्कनीयम् । उभयोरपि शृङ्गाराश्रयत्वात् नायिकानायकयोरन्यतरसंबन्धेनापि कार्यसिद्धेः । हद्धीति निर्वेदे निपातः । तदेव संवृत्तम् । कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा च शप्त्वा चटुलपददुर्वारया गत्या निवृत्तः । कोऽन्यो वा हुतवहाद्दग्धुं प्रभविष्यति । गच्छ पादयोः प्रणम्य निवर्तयैनम् । यावदह-

**अनसूया**—(पदान्तरे स्खलितं निरूप्य)

अम्हो, आवेगक्खलिदाए मह पब्भट्टं अग्गहत्थादो पुप्फभाअणं।

अहो, आवेगस्खलिताया मम प्रभ्रष्टमग्रहस्तात्पुष्पभाजनम् ।

[इति पुष्पोच्चयं रूपयति ।

(प्रविश्य)

**प्रियंवदा**—सहि, पकिदिवक्को सो कस्स अणुणअं पडिगेण्हदि । किंचि उण साणुक्कोसो किदो ।

सखि, प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति । किंचित्पुनः सानुक्रोशः कृतः ।

**अनसूया**—(सस्मितं) तस्सिं बहु तं वि । कहेहि ।

(सस्मितं) तस्मिन्बहु तदपि । कथय ।

**प्रियंवदा**—जदा णिवत्तिदुं ण इच्छदि तदा विण्णविदो मए—भअवं, पढमभत्तिं अवेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वो त्ति ।

यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया—भगवन्, प्रथमभक्तिमवेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति ।

**अनसूया**—तदो तदो । ततस्ततः ।

**प्रियंवदा**—तदो ण मे वअणं अण्णहाभविदुं अरुहदि, किंदु

---

मर्घ्योदकं गृहीत्वोपसर्पामि । अहो आवेगस्खलिताया मम प्रभ्रष्टमग्रहस्तात्पुष्पभाजनम् । सखि प्रकृतिवक्रः कस्यानुनयं प्रतिगृह्णाति । किंचित्पुनः सानुक्रोशः कृतः । तस्मिन्बहु तदपि । यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया—भगवन् प्रथमभक्तिमवेक्ष्य अज्ञाततपःप्रभावस्य दुहितृजनस्य भगवता एकोऽ-

अहिण्णाणाहरणदंसणेण सावो णिवत्तिस्सदि त्ति मन्तअन्तो एव्व अन्तरिहिदो ।

ततो न मे वचनमन्यथाभवितुमर्हति, किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयमाण एवान्तर्हितः ।

**अनसूया**—सक्कं दाणिं अस्ससिदुं । अत्थि तेण राएसिणा संपत्थिदेण सणामहेअङ्किअं अङ्गुलीअअं सुमरणीअंत्ति सअं पिणद्धं । तेण साहीणोवाआ सउन्दला भविस्सदि ।

शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तेन स्वाधीनोपाया शकुन्तला भविष्यति ।

**प्रियंवदा**—सहि, एहि । देवकज्जं दाव से णिव्वत्तेम्ह ।

सखि, एहि । देवकार्यं तावदस्या निर्वर्तयावः ।

(इति परिक्रामतः ।)

**प्रियंवदा**—(विलोक्य) अणसूए, पेक्ख दाव णं वामहत्थोवहिदवअणं आलिहिदं विअ पिअसहिं । भत्तुगदाए चिन्ताए अत्ताणं वि एसा ण विभावेदि । किं उण आअन्तुअं ।

---

पराधो मर्षितव्यः । ततस्ततः । न मे वचनमन्यथा भवितुमर्हति । अभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयमाण एवान्तर्हितः । शक्यमिदानीमाश्वासयितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन प्रस्थातुमुद्युक्तेन । 'आशंसायां भूतवच्च' इति भूतवत्प्रत्ययः । संप्रार्थितेनेति केषांचिद्व्याख्यानं तु अङ्गुलीयकं देहीति शकुन्तला राजानं स्वयमेव प्रार्थितवतीति अनुचितार्थस्फोरणादयुक्तम् । स्वयं तेन पिनद्धमित्युत्तरग्रन्थविरोधश्च । स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं तेन पिनद्धम् । तेन स्वाधीनोपाया शकुन्तला भविष्यति । एहि देवकार्यं तावदस्या निर्वर्तयावः । अनसूये पश्य

(विलोक्य) अनसूये, पश्य तावदेनां वामहस्तोपहितवदनामालिखितामिव प्रियसखीम् । भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति । किं पुनरागन्तुकम् ।

**अनसूया**—पिअंवदे, दुवेणं एव्व णो मुहे एसो वुत्तन्तो चिट्ठदु । रक्खणीआ क्खु पकिदिपेसला सही ।

प्रियंवदे, द्वयोरेव नौ मुख एष वृत्तान्तस्तिष्ठतु । रक्षणीया खलु प्रकृतिपेशला सखी ।

**प्रियंवदा**--को दाणिं उण्होदएण णोमालिअं सिञ्चदि ।

क इदानीमुष्णोदकेन नवमालिकां सिञ्चति ।

(इत्युभे निष्क्रान्ते ।)

**प्रवेशकः ।**

(ततः प्रविशति सुप्तोत्थितः शिष्यः ।)

**शिष्यः**—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन । प्रकाशे निर्गतस्तावदवलोकयामि— कियदवशिष्टं रजन्या इति । (परिक्रम्यावलोक्य च) हन्त प्रभातम् । तथा हि ।

**यात्येकतोऽस्तशिखरं पतिरोषधीना-**
**माविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।**

---

तावदेनां वामहस्तोपहितवदनामालिखितामिव प्रियसखीं भर्तृगतचिन्तया । आत्मानमप्येषा न विभावयति । किं पुनरागन्तुकम् । प्रियंवदे द्वयोरेव नौ मुखे एष वृत्तान्तस्तिष्ठतु । रक्षणीया खलु प्रकृतिपेशला सखी । क इदानीमुष्णोदकेन केसरमालिकां सिञ्चति । इति प्रवेशकः ॥

**ततः प्रविशतीत्यादि ॥ यात्येकत इति ॥** आत्मदशान्तरेष्विति विषयसप्तमी । लोको जनः व्यसनोदयाभ्यां हेतुभ्यां नियम्यते विनीयत

Simultaneously

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ २ ॥

अपि च ।

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ३ ॥

(प्रविश्य पटाक्षेपेण)

**अनसूया**—एव्वं णाम विसअपरम्मुहस्स वि जणस्स ण एदं ण विदिअं । तह वि तेण रण्णा सउन्दलाए अणज्जं आअरिदं ।

एवं नाम विषयपराङ्मुखस्यापि जनस्य नैतन्न विदितम् । तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम् ।

**शिष्यः**—यावदुपस्थितां होमवेलां गुरवे निवेदयामि ।

[इति निष्क्रान्तः ।

---

इति । सुखदुःखयोरनित्यत्वात् तयोः प्राप्तयोः सतोरितिकर्तव्यमित्युपदिश्यत इत्यर्थः । **अन्तर्हित इति** ॥ शशिनि चन्द्रे अन्तर्हिते व्यवहिते सति सैव पूर्वमतिरम्यतया दृष्टैव । प्रकामं सिद्धार्थानुभूतार्थविषयो हि तच्छब्दः । कुमुद्वती 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुप् । डित्त्वाट्टिलोपः । संस्मरणीयशोभा अपगतकान्तिरित्यर्थः । दृष्टिं नयनं न नन्दयति न प्रीणयति । अर्थान्तरन्यासेन तदेवोपपादयति । इष्टप्रवासजनितानि प्रियवियोगोत्पादितानि दुःखानि अतिमात्रसुदुःसहानि अतिमात्राणि प्रमाणाधिकानि सुदुःसहानि सुतरामविषह्याणि । पटाक्षेपेण यवनिकापनोदनेन । हर्षशोकादिसंभ्रमयुक्तस्य पात्रस्य प्रवेशः पटाक्षेपेण क्रियत इति कविव्यवहारः । एवं नाम विषयपराङ्मुखस्यापि जनस्य नैतन्न विदितम् । तेन राज्ञा शकुन्तलायामन्याय्यमाचरितम् । प्रति-

अनसूया—पडिबुद्धा वि किं करिस्सं । ण मे उइदेसु वि करणिज्जेसु हत्थपाआ पसरन्ति । सकामो दाणिं कामो होदु । जेण असच्चसंधे जणे पदं कारिदा सही दाणिं सुण्णहिअआ । अहवा दुव्वासकोवो एव्वं विआरेदि । अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स कालस्स लेहमेत्तं वि ण विसज्जेदि । ता इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेमि । अहवा दुक्खसीले तवस्सिजणे को वा अब्भत्थीअदि । णं सहीगामी दोसो त्ति व्ववासिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकस्सवस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदेदुं । इत्थंगदे किं णु खु अम्हेहिं करणिज्जं ।

प्रतिबुद्धापि किं करिष्यामि । न मे उचितेष्वपि करणीयेषु हस्तपादं प्रसरति । सकाम इदानीं कामो भवतु । येनासत्यसंधे जने पदं कारिता सखीदानीं शून्यहृदया । अथवा दुर्वासःकोप एवं विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावतः कालस्य लेखमात्रमपि न विसर्जयति । तदितोऽभिज्ञानमङ्गुलीयकमस्य विसर्जयामि । अथवा दुःखशीले तपस्विजने को वाभ्यर्थ्यते । ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्ताय तातकाश्यपाय दुष्य-

---

बुद्धापि राज्ञा कृतमन्याय्यं ज्ञातवत्यपि किं करिष्यामि । तेन उचितेषु करणीयेषु हस्तपादं न प्रसरति । अत्रोचितानि राजानं प्रति लेखनादीनि कर्माणि । सकाम इदानीं कामो भवतु । येन कामेन असत्यसंधे जने पदं कारिता सखीदानीम् । शून्यहृदया रिक्तमनाः । अथवा दुर्वासःकोप एवं विकारयति । अन्यथा कथं स राजर्षिः तादृशानि मन्त्रयित्वा एतावतः कालस्य लेखमात्रमपि न विसर्जयति । तस्मादितोऽभिज्ञानाङ्गुलीयकमस्य विसर्जयिष्यामि । अथवा दुःखशीलान् तपस्विजनान् को वाभ्यर्थयते । सखीगामी दोष इति न पारयामि प्रवासप्रतिनि-

न्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगते किंनु खल्वस्माभिः करणीयम् ।

(प्रविश्य)

**प्रियंवदा**—(सहर्षं) सहि, तुवर सउन्दलाए पत्थाणकोदुअं णिव्वत्तेदुं ।

(सहर्षं) सखि, त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् ।

**अनसूया**—कहं एदं ।　　कथमेतत् ।

**प्रियंवदा**—सुणाहि । दाणिं सुहसअणपुच्छिआ सउन्दलाए सआसं गदम्हि । तदो जाव णं लज्जावणदवअणं परिस्सजिअ तादकस्सवेण एव्वं अहिणन्दिदं । दिट्ठिआ धूमावरुद्धदिट्ठिणो वि यजमाणस्स पावए एव्व आहुदी पडिदा । वच्छे, सुसिस्सपरिदिण्णा विअ विज्जा असोअणिज्जासि मे संवुत्ता । अज्ज एव्व राएसिपरिगहीदं तुमं भत्तुणो सआसं विसज्जेमित्ति ।

श्रृणु । इदानीं सुखशयनपृच्छिका शकुन्तलायाः सकाशं गतास्मि । ततो यावदेनां लज्जावनतवदनां परिष्वज्य तातकाश्यपेनैवमभिनन्दितम्—दिष्ट्या धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिः

---

वृत्ताय तातकाश्यपाय दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । अत्र सख्या महर्षये कथनीयस्य शकुन्तलावृत्तान्तस्य कपटेन अकथनादभूताहरणमिति गर्भसंधेः प्रथमाङ्गमुक्तम् । 'अभूताहरणं प्राहुः कपटोपायकल्पनम्' इति । इत्थंगते किं नु खल्वस्माभिः करणीयम् । इत्थं गते प्राप्तकर्मणीत्यर्थः । सखि, त्वरस्व शकुन्तलायाः प्रस्थानकौतुकप्रयाणमङ्गलं निर्वर्तयितुम् । कथमेतत् । श्रृणु । इदानीं सुखशयनपृच्छिका शकुन्तलायाः समीपं गतास्मि । ततो यावदेनां लज्जावनतवदनां परिष्वज्य तातकाश्यपेनैवमभिहितम् । दिष्ट्या

पतिता । वत्से, सुशिष्यपरिदत्तेव विद्याऽशोचनीयासि मे संवृत्ता । अद्येव राजर्षिपरिगृहीतां त्वां भर्तुः सकाशं विसर्जयामीति ।

**अनसूया**—अह केण सूइदो अअं तादकस्सवस्स वुत्तन्तो ।

अथ केन सूचितोऽयं तातकाश्यपाय वृत्तान्तः ।

**प्रियंवदा**—अग्गिसरणं पविट्ठस्स छन्दोमईए असरीरिणीए वाआए ।

अग्निशरणं प्रविष्टस्य छन्दोमय्या अशरीरिण्या वाचा ।

**अनसूया**—(सहर्षं) कहेहि कहेहि । कथय कथय ।

**प्रियंवदा**—(संस्कृतमाश्रित्य)

**दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।**
**अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४ ॥**

**अनसूया**—(प्रियंवदामाश्लिष्य) सहि पिअं मे । किंदु अज्ज एव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणं परितोसं अणुहोमि ।

(प्रियंवदामाश्लिष्य) सखि, प्रियं मे । किं त्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि ।

**प्रियंवदा**—सहि, वअं दाव उक्कण्ठं विणोदइस्सामो । सा तवस्सिणी णिव्वुदा होदु ।

---

धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से सुशिष्यपरिदत्तेव विद्या अशोचनीयासि मे संवृत्ता । अद्यैव राजर्षिपरिगृहीतां त्वां भर्तुः सकाशं विसर्जयामीति । अथ केन सूचितोऽयं तातकाश्यपस्य वृत्तान्तः । अग्निशरणं प्रविष्टस्य छन्दोमय्या अशरीरिण्या वाचा । कथय । अत्र संस्कृतभाषामाश्रित्य—**दुष्यन्तेनाहितमिति** ॥ आहितं निषिक्तं तेजः वीर्यम् । शकुन्तलाम् अग्निगर्भाम् अग्निर्गर्भे यस्यास्ताम् । अत्र यथार्थकथनान्मार्ग इति संध्यङ्गमुक्तम् । 'तत्त्वार्थकथनं मार्ग' इति । सखि प्रियंवदे किंत्वद्यैव शकुन्तला नीयत

सखि, आवां तावदुत्कण्ठां विनोदयिष्यावः । सा तपस्विनी निर्वृता भवतु ।

**अनसूया**—तेण हि एदस्सिं चूदसाहावलम्बिदे णालिएरसमुग्गए तण्णिमित्तं एव्व कालान्तरक्खमा णिक्खित्ता मए केसरमालिआ । तं तुमं हत्थसंणिहिदं करेहि । जाव अहं से गोरोअणं तित्थमित्तिआ दुव्वाकिसलआणि त्ति मङ्गलसमालम्भणाणि विरएमि ।

तेन ह्येतस्मिंश्चूतशाखावलम्बिते नालिकेरसमुद्गके तन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तां त्वं हस्तसंनिहितां कुरु । यावदहमस्या गोरोचनं तीर्थमृत्तिका दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि ।

**प्रियंवदा**—तह करीअदु । तथा क्रियताम् ।

(अनसूया निष्क्रान्ता । प्रियंवदा नाट्येन सुमनसो गृह्णाति ।)

(नेपथ्ये)

गौतमि, आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ।

**प्रियंवदा**—(कर्णं दत्त्वा) अणसूए, तुवर । एदे क्खु हत्थिणाणअरगामिणो इसिओ सद्दाअन्ति ।

---

इत्युत्कण्ठासाधारणं परितोषमनुभवामि । सखि आवां तावदुत्कण्ठां विनोदयिष्यावः । सा तपस्विनी निर्वृता भवतु । तेन ह्येतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके तन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तां त्वं हस्तसंनिहितां कुरु । यावदहमस्या गोरोचनं तीर्थमृत्तिका दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि संपादयामि । समालम्भनं नाम विलेपनम् । तथा क्रियताम् । अनसूये पश्य । एते खलु हस्तिनानगरगामिनः

(कर्णं दत्त्वा) अनसूये, त्वरस्व । एते खलु हस्तिनानगरगामिन ऋषयः शब्दायन्ते ।

(प्रविश्य समालम्भनहस्ता)

**अनसूया**—सहि, एहि । सखि, एहि ।

(इति परिक्रामतः ।)

**प्रियंवदा**—(विलोक्य) **एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवारहत्थाहिं सोत्थिवाअणिकाहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ । उवसप्पम्ह णं ।**

(विलोक्य) एषा सूर्योदय एव शिखामार्जिता प्रतीष्टनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनाम् । [इत्युपसर्पतः ।

(ततः प्रविशति यथोद्दिष्टव्यापारा आसनस्था शकुन्तला ।)

**तापसीनामन्यतमा**—(शकुन्तलां प्रति) **जादे, भत्तुणो बहुमाणसूअअं महादेवीसद्दं अहिअच्छ ।**

(शकुन्तलां प्रति) जाते, भर्तुर्बहुमानसूचकं महादेवीशब्दमधिगच्छ ।

**द्वितीया**—**वच्छे, वीरप्पसविणी होहि ।**

वत्से, वीरप्रसविनी भव ।

**तृतीया**—**जाते, भत्तुणो बहुमदा होहि ।**

जाते, भर्तुर्बहुमता भव ।

[इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः ।

---

ऋषयः शब्दायन्ते । सखि एहि । एषा सूर्योदये शिखामार्जिता अभ्यक्तस्नातैव साक्षतहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । तदुपसर्पाव एनाम् । प्रतिष्ठितानि प्रतिगृहीतानि नीवारस्वस्तिवाचनानि याभिस्तास्तथोक्ताः । स्वस्तिवाचनं नाम देवतोद्देशेन दीयमानं पटविध्यवसितं यौतकादिकमुच्यते । जाते भर्तुर्बहुमानसूचकं महादेवीशब्दमधिगच्छ । वत्से

**सख्यौ**—(उपसृत्य) सहि, सुहमज्जणं दे जादं ?

(उपसृत्य) सखि सुखमज्जनं ते जातम् ?

**शकुन्तला**—साअदं मे पिअसहीणं । इदो णिसीदह ।

स्वागतं मे प्रियसखीभ्याम् । इतो निषीदतम् ।

**उभे**—(मङ्गलपात्राण्यादाय उपविश्य)

हला सउन्दळे सज्जा होहि । जाव दे वअं मङ्गलसमालम्भणं विरएम ।

हला शकुन्तले, सज्जा भव । यावत्ते आवां मङ्गलसमालम्भनं विरचयावः ।

**शकुन्तला**—इदं खु बहुमन्तव्वं । दुल्लहं दाव मम सहीमण्डणं भविस्सदि ।

इदं खलु बहुमन्तव्यम् । दुर्लभं तावन्मम सखीमण्डनं भविष्यति ।

(इति बाष्पं विसृजति ।)

**उभे**—सहि, ण दे उइदं मङ्गलकाले रोइदुं ।

सखि, न ते उचितं मङ्गलकाले रोदितुम् ।

[इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः ।

**प्रियंवदा**—आहरणोइदं रूवं अस्समसुलहेहिं पसाहणेहिं वि-आरीआदि ।

आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विकार्यते ।

---

वीरप्रसविणी भव । जाते भर्तुर्बहुमता भव । सखि सुखमज्जनं जातम् । स्वागतं मे प्रियसखीभ्याम् । इतो निषीदतम् । सखि शकुन्तले सज्जा भव । यावत्ते आवां मङ्गलसमालम्भनं विरचयावः । इदं खलु बहुमन्तव्यम् । दुर्लभं तावन्मम सखीमण्डनं भविष्यति । सखि न ते उचितं मङ्गलकाले रोदितुम् । आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विकार्यते । वत्स

(प्रविश्योपायनहस्तौ)

**ऋषिकुमारकौ**—इदमलंकरणम् । अलंक्रियतामत्रभवती ।

(सर्वा विलोक्य विस्मिताः ।)

**गौतमी**—वच्छ णारद, कुदो एदं । वत्स नारद, कुत एतत् ।

**प्रथमः**—तातकाश्यपप्रभावात् ।

**गौतमी**—किं माणसी सिट्ठी । किं मानसी सृष्टिः ।

**द्वितीयः**—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं

**क्षौमं केनचिदिन्दुपाण्डु तरुणा मङ्गल्यमाविष्कृतं**
**निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।**
**अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-**
**र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ५ ॥**

**प्रियंवदा**—(शकुन्तलां विलोक्य) हला, इमाए अब्भुववत्तीए सूइआ दे भत्तुणो गेहे अणुहोदव्वा राअलच्छी ।

---

नारद कुत एतत् । किं मानसी सृष्टिः । ततः । **क्षौमं केनचिदिति ॥** मङ्गल्यं मङ्गलार्थमाविष्कृतमुद्भावितम् । निष्ठ्यूतः उद्गीर्णः । चरणोपभोगसुलभः चरणोपभोगाय पादालंकाराय सुलभः सुखेन लभ्यः । आपर्वभागोत्थितैः । पर्वभागः करतलसंबन्धी मणिबन्धोऽवगन्तव्यः । अन्येभ्यः इतरेभ्यस्तरुभ्यः । अत्र सखीभ्यामाभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विकार्यत इत्याभरणेष्वाकांक्षितेषु सत्सु शिष्यैस्तरुभ्यो लब्धानां क्षौमादीनां समर्पणात्क्रमो नाम संध्यङ्गमुक्तम् । यथोक्तं—'चिन्त्यमानार्थसंप्राप्तिः क्रम इत्यभिधीयते' इति । सखि अनया अभ्युपपत्त्या सूचिता ते

(शकुन्तलां विलोक्य) हला, अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीः ।

(शकुन्तला व्रीडां रूपयति ।)

**प्रथमः**—गौतम, एह्येहि । अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

**द्वितीयः**—तथा । [इति निष्क्रान्तौ ।

**सख्यौ**—अए अणुवजुत्तभूसणो अअं जणो । तह वि चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेम्ह ।

अये, अनुपयुक्तभूषणोऽयं जनः । तथापि चित्रकर्मपरिचयेनाङ्गेषु ते आभरणविनियोगं कुर्वः ।

**शकुन्तला**—जाणे वो णेउणं । जाने वां नैपुणम् ।

(उभे नाट्येनालंकुरुतः ।)

(ततः प्रविशति स्नानोत्तीर्णः काश्यपः ।)

**काश्यपः**—

**यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया**
**कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।**
**वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः**
**पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ६ ॥**

(इति परिक्रामति ।)

---

भर्तुर्गेहे अनुभवितव्या राजलक्ष्मीः । अनुपयुक्तभूषणोऽयं जनः । तथापि चित्रकर्मपरिचयेन ते अङ्गेष्वाभरणविनियोगं कुर्वः । जाने वां नैपुण्यम् । **यास्यत्यद्येति** ॥ चिन्ताजडं स्तब्धम् । हृदये चिन्तजाडे सति दर्शनस्यापि तथाभावः । मम तावत् ममैवेत्यर्थः । ईदृशम् एवंविधम् । अत्र नवैरिति विशेषणेन

**सख्यौ**—हला सउन्दले, अवसिदमण्डणासि । परिधेहि संपदं खोमजुअलं ।

हला शकुन्तले, अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगलम् ।

(शकुन्तलोत्थाय परिधत्ते ।)

**गौतमी**—जादे, एसो दे आणन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स ।

जाते, एष ते आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व ।

**शकुन्तला**—(सव्रीडं) ताद, वन्दामि । तात, वन्दे ।

**काश्यपः**—वत्से,

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ७ ॥

**गौतमी**—भअवं, वरो क्खु एसो ण आसिसा ।

भगवन्, वरः खल्वेष नाशीः ।

**काश्यपः**—वत्से, इतः सद्योहुतानग्नीन्प्रदक्षिणीकुरुष्व ।

(सर्वे परिक्रामन्ति ।)

---

पीडातिशयः कथितः । सखि शकुन्तले अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगलम् । जाते आनन्दपरिवाहिना चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व । तात वन्दे । **ययातेरित्यादि** ॥ ययातिर्नाम नहुषपुत्रः सोमवंशीयो राजा । शर्मिष्ठेति वृषपर्वनाम्नः सुरराजस्य पुत्री । शर्मिष्ठा पूरुमिव । पूरुश्च पुरुश्चेत्युभयथा व्यवहारोऽस्ति । सम्राजं पुत्रमाप्नुहि लभस्व । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । भगवन् वरे खल्वेते न त्वाशिषौ । एते इति द्विवचनेन

**काश्यपः**—(ऋक्छन्दसाशास्ते)

**अमी वेदिं परितः क्लृप्तधिष्ण्याः**
**समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।**
**अपघ्नन्तो दुरितं हव्यगन्धै-**
**र्वैतानास्त्वां वह्नयः पालयन्तु ॥ ८ ॥**

प्रतिष्ठस्वेदानीम् । (सदृष्टिक्षेपं) क ते शार्ङ्गरवमिश्राः ।

(प्रविश्य)

**शिष्यः**—भगवन्, इमे स्मः ।

**काश्यपः**—भगिन्यास्ते मार्गमादेशय ।

**शार्ङ्गरवः**—इत इतो भवती ।

(सर्वे परिक्रामन्ति ।)

**काश्यपः**—भो भोः संनिहितास्तपोवनतरवः,

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।**
**आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ९ ॥**

(कोकिलरवं सूचयित्वा) आः!

---

भर्तुर्बहुमता भव सम्राजं पुत्रमाप्नुहीत्येतद्वयं गृह्यते । **अमी वेदिमित्यादि ॥** वेदिं परितः वेद्याः समन्तात् । 'अभितःपरित' इत्यादिना द्वितीया । क्लृप्तधिष्ण्याः रचिताधिष्ठानाः । समिद्वन्तः इध्मवन्तः । प्रान्तेषु पार्श्वेषु चतसृषु दिक्षु संस्तीर्णा दर्भा येषां ते तथोक्ताः । हव्यानामाज्यादीनां गन्धैः दुरितं पापं अपघ्नन्तः । वैतानाः वितानस्य यागस्य संबन्धिनः । वह्नयस्त्वां पालयन्तु रक्षन्तु । अस्य वृत्तस्य वेदोक्ताशीर्वचनसदृशत्वं मुनिप्रयुक्तत्वादिति मन्तव्यम् । **पातु-**

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥ १० ॥

(आकाशे)

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ ११ ॥

(सर्वे सविस्मयमाकर्णयन्ति ।)

**गौतमी**—जादे, णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं । पणम भअवदीणं ।

---

मिति ॥ या शकुन्तला युष्मास्वपीतेषु न विद्यते पीतं पानं येषां ते तथोक्तास्तेषु । पीतमिति भावे क्तः । सर्वैर्भवद्भिरनुज्ञायताम् । **अनुमतगमनेत्यादि** ॥ अत्र सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायतामित्युक्ते सत्यनन्तरं यत्कोकिल-रुतं तेन शकुन्तलागमनानुमतिः तरुभिः कृतेत्यनेनानुमानमिति संध्यङ्ग-मुक्तम् । यथोक्तम्—'ऊहश्च लिङ्गतः सम्यगनुमानमिति स्मृतम्' इति । **रम्यान्तर इत्यादि** ॥ छायाद्रुमैः छायाप्रधानैः द्रुमैः । चुलकितः शमितः अर्कमयूखानां तापो यस्य स तथोक्तः । कुशेशयरजोमृदुरेणुः । कुशेशयानां रजः परागः तदिव मृदू रेणुर्यस्य स तथोक्तः । शान्तश्चानुकूलश्च शान्तानुकूलः पवनो यस्य स तथोक्तः । मन्द इत्यर्थः । चकारः समुच्चये । अत्र प्रयुक्तविशेषणैः पूर्वोक्तकोकिलरुतेन च शकुन्तलाया यात्रायां निमित्तं सूचितमित्यनुसंधेयम् । **जातेति** ॥ ज्ञातिजनस्निग्धाभिः ज्ञातिजना इव स्निग्धास्ताभिः अनुज्ञातगमना

जाते, ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीभ्यः ।

**शकुन्तला**—(सप्रणामं परिक्रम्य, जनान्तिकं)

हला पिअंवदे, अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खेण मे चलणा पुरदोमुहा वट्टंति ।

हला प्रियंवदे, आर्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतोमुखौ वर्तेते ।

**प्रियंवदा**—ण केवलं तवोवणविरहकादरा सही एव्व । एव्वं तुए उवट्ठिदविओअस्स तवोवणस्स वि दाव समवत्थं पेक्ख ।

**उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा ।**
**ओसरिअपण्डुपत्ता मुअन्ति अस्सू विअ लदाओ ॥ १२ ॥**

न केवलं तपोवनविरहकातरा सख्येव । एवं त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्थां पश्य ।

उद्गलितदर्भकबला मृगाः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥

**शकुन्तला**—(स्मृत्वा) ताद, लदाबहिणिअं वणज्जोसिणिं दाव आमन्तइस्सं ।

(स्मृत्वा) तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ।

**काश्यपः**—अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

---

तपोवनदेवताभिः । प्रणम भगवतीभ्यः । सखि प्रियंवदे आर्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्याः दुःखेन चरणौ मे विमुखौ वर्तेते । न केवलं तपोवनविरहकातरा सख्येव । एवं त्वया उपस्थितवियोगस्य तपोवनस्यापि तावत् समवस्थां पश्य । उद्गलितदर्भकबला मृगाः परित्यक्तनर्तना मयूराः । निपतत्पाण्डुपत्राः मुञ्चन्त्यश्रूणीव लताः ॥ तात लताभगिनीं वनज्योत्स्नीं तावदामन्त्र-

**शकुन्तला**—(लतामुपेत्य) वणज्जोसिणि, चूदसंगदा वि पच्चालिङ्ग मं इदोगदाहिं साहाबाहाहिं । अज्जप्पहुदि दूरवत्तिणी खु अहं दे भविस्सं ।

(लतामुपेत्य) वनज्योत्स्ने, चूतसंगतापि प्रत्यालिङ्ग मामितोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरवर्तिनी खल्वहं ते भविष्यामि ।

**काश्यपः**—

**संकल्पितं प्रथममेव मया तवार्थे**
**भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।**
**चूतेन संगतवती नवमालिकेय-**
**मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ १३ ॥**

इतः पन्थानं प्रतिपद्यस्व ।

**शकुन्तला**—(सख्यौ प्रति) हला, एसा दुवेणं वि वो हत्थणिक्खेवो ।

(सख्यौ प्रति) हला, एषा द्वयोरपि वां हस्तनिक्षेपः ।

**सख्यौ**—अअं जणो दाणिं कस्स हत्थे समप्पिदो ।

अयं जन इदानीं कस्य हस्ते समर्पितः ।　　　[इति बाष्पं विकिरतः ।

**काश्यपः**—अनसूये, अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

(सर्वे परिक्रामन्ति ।)

---

यिष्ये । वनज्योत्स्नि चूतसंगतापि प्रत्यालिङ्ग मामितोगताभिः शाखाबाहाभिः । अद्य प्रभृति दूरवर्तिनी खल्वहं ते भविष्यामि । **संकल्पितमित्यादि** ॥ तवार्थे तव कृते । 'अर्थे कृते च तादर्थ्ये' इति केशवस्वामी । पूर्वमेव संकल्पितमात्मसदृशं त्वत्समं भर्तारं पतिं त्वं गता प्राप्ता । इयं नवमालिका चूतेन संगतवती । अत्र नवमालिका शकुन्तलायाः प्रीतिपात्रमिति मन्तव्यम् । सख्यौ एषा द्वयोरपि वां

**शकुन्तला**—ताद, एसा उडजपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिआणिवेदइत्तअं विसज्जेहि ।

तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मे कमपि प्रियनिवेदयितृकं विसर्जय ।

**काश्यपः**—नेदं विस्मरिष्यामः ।

**शकुन्तला**—(गतिभङ्गं रूपयित्वा)

किं णु खु एदं पुणो वि णिवसणे मे सज्जइ ।

किं नु खल्वेतत्पुनरपि निवसने मे सज्जति । [इति परावर्तते ।

**काश्यपः**—वत्से,

**यस्य त्वया व्रणविरोपणमिङ्गुदीनां**
**तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।**
**श्यामाकमुष्टिपरिवर्धितको जहाति**
**सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १४ ॥**

**शकुन्तला**—वच्छ, किं सहवासपरिच्चाइणिं मं अणुसरसि । अचिरप्पसूदाए जणणीए वि विणा वड्ढिदो एव्व । दाणिं पि

---

हस्तनिक्षेपः । अयं जनः इदनीं कस्य हस्ते समर्पितः । तात एषा उटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूः यदा अनघप्रसवा व्यसनरहितप्रसूतिर्भवति तदा मे कमपि प्रियनिवेदयितृकं विसर्जय । किं नु खल्वेतत्पुनरपि निवसनपटे सज्जति । **यस्य त्वयेत्यादि** ॥ व्रणविरोपणं व्रणनिवर्तकम् । कुशा एव सूचयः ताभिर्विद्धे भिन्ने । श्यामाका नाम धान्यविशेषास्तेषां मुष्टिभिः परिवर्धितकः पोषितकः अनुकम्पया वर्धित इत्यर्थः । अनुकम्पायामिति कः । पुत्रकृतकः अपुत्रः पुत्रः कृतः । 'श्रेण्यादयः कृतादिभिः' इति समासः । कृतक

मए विरहिदं तुमं तादो चिन्तइस्सदि । णिवत्तेहि दाव ।

वत्स, किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विनापि वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् । [इति रुदती प्रस्थिता ।

**काश्यपः**—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विहतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १५ ॥

**शार्ङ्गरवः**—भगवन्, ओदकान्तात्स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

**काश्यपः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

(सर्वे परिक्रम्य स्थिताः ।)

**काश्यपः**—(आत्मगतं) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् । (इति चिन्तयति ।)

**शकुन्तला**—(जनान्तिकं) हला, पेक्खह । दक्खिणदो णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरसदि । दुक्करं खु अहं करेमि ।

---

इति स्वार्थे कः । वत्स किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विनापि वर्धित एव । इदानीमपि त्वां मया विरहितं तातश्चिन्तयिष्यति । निवर्तस्व तावत् । **उत्पक्ष्मणोरित्यादि** ॥ उपरुद्धवृत्तिः उपरुद्धा वृत्तिर्व्यापारो येन स तथोक्तः । ओदकान्तात् आजलान्तात् स्निग्धो जनोऽनुगन्तव्यः ।

(जनान्तिकं) सख्यौ पश्यतम् । दक्षिणतो नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारसति । दुष्करं खल्वहं करोमि ।

**अनसूया**—सहि, मा एव्वं मन्तेहि ।

**एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं ।**
**गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ॥ १६ ॥**

सखि, मैवं मन्त्रयस्व ।

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥

**काश्यपः**—शार्ङ्गरव, इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

**शार्ङ्गरवः**—आज्ञापयतु भवान् ।

**काश्यपः**—

**अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-**
**स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।**

---

'ओदकान्तात्प्रियः पान्थमनुव्रजेत्' इति स्मरणात् । सख्यौ पश्यतं दक्षिणतो नलिनीपत्रान्तरितमपि सहचरमपश्यन्ती चक्रवाकी आरसति । दुष्करं खल्वहं तर्कयामि । अनेन शापतिरोहितं दुष्यन्तमप्राप्स्यमानायाः शकुन्तलायाः भाविदुःखं तुल्यसंविधानतया सूचितम् । तस्मादिदं तुल्येन संविधानेन कृतं पताकास्थानकम् । तथोक्तं—'पताकास्थानकं प्राहुर्भाविनोऽर्थस्य सूचनम् । चतुर्भिः करणैरेतच्चतुर्धा परिकीर्तितम् ॥ सहसैवार्थसंपत्त्या विमर्शादनु निर्णयात् । तुल्येन संविधानेन तथा तुल्यविशेषणात् ॥' इति । सखि मैवं मन्त्रयस्व । 'एषा प्रियेण विनापि रजनीं निगमयति दीर्घतराम् । गुरुकमपि विरहदुःखमाशाबन्धः साहयति, सह्यं करोतीत्यर्थः । अयमर्थो मेघसंदेशे व्यक्तः—'तां चावश्यं दिवसगणनातत्परामेकपत्नीमव्यापन्नामविहतगतिर्द्रक्ष्यसि

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥१७॥

**शार्ङ्गरवः**—गृहीतः संदेशः ।

**काश्यपः**—वत्से, त्वमिदानीमनुशासनीयासि । वनौकसोऽपि सन्तो लोकज्ञा वयम् ।

**शार्ङ्गरवः**—न खलु धीमतां कश्चिदविषयो नाम ।

**काश्यपः**—सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १८ ॥

---

भ्रातृजायाम् । आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥' इति । **अस्मानिति** ॥ संयमधनानस्मान् विचिन्त्ये-त्यनेन महर्षेर्मान्यत्वं गम्यते । उच्चैः कुलं साधु विचिन्त्येत्यनेन कुलस्य न्यायव-र्तित्वं ज्ञाप्यते । त्वयि विषये अस्याः शकुन्तलाया बान्धवैः कृता न भवती-त्यबान्धवकृता तां कथमपि केनापि प्रकारेण सिद्धां कामातिशयवत्तया त्वयैव ज्ञातां स्नेहप्रवृत्तिं स्नेहप्रवर्तनं साधु विचिन्त्येत्यनेन शकुन्तलायामस्यादरणीयत्वं गम्यते । दारेष्विति निर्धारणे सप्तमी । सामान्यप्रतिपत्तिपूर्वकं यथा भवति तथा द्रष्टव्या । अतः सामान्यप्रतिपत्तेः परमतिरिक्तं विशेषप्रतिपत्तिरित्यर्थः । भाग्यायत्तं भाग्याधीनम् । तत् तस्मात्कारणात् वधूबन्धुभिर्न वाच्यं न कथनीयम् । वक्तुं न युक्तमित्यर्थः । अत्र अस्मान् साधु विचिन्त्येत्यादिवाक्यपर्यालोच-नया इयं शकुन्तला विशेषप्रतिपत्त्यर्हेति सूचितं भवति । अनुसान्त्वनस्य गम्य-मानत्वात्संग्रहो नाम संध्यङ्गमुक्तं भवति । यथोक्तं—'संग्रहः सामदानाभ्यां वशीकरणमुच्यते' इति । **शुश्रूषस्वेत्यादि** ॥ गुरून् श्वशुरादीन् शुश्रूषस्व

कथं वा गौतमी मन्यते ।

**गौतमी**—एत्तिओ एव्व वहूजणस्स उपदेसो । वच्छे, एदं क्खु सव्वं ओधारेहि ।

एतावानेव वधूजनस्योपदेशः । वत्से, एतत्खलु सर्वमवधारय ।

**काश्यपः**—वत्से, परिष्वजस्व मां सखीजनं च ।

**शकुन्तला**—ताद, इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति ।

तात, इत एव किं प्रियंवदामिश्रे सख्यौ निवर्तिष्येते ।

**काश्यपः**—वत्से, इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

**शकुन्तला**—(पितरमाश्लिष्य) कहं दाणिं तादस्स अङ्कादो परिब्भट्टा मलअतडुम्मूलिआ विअ चन्दणलदा देसन्तरे जीविअं धारइस्सं ।

(पितरमाश्लिष्य) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलितेव चन्दनलता देशान्तरे जीवितं धारयिष्यामि ।

**काश्यपः**—वत्से, किमेवं कातरासि ।

---

परिचर । सन्नन्तः शृणोतिः परिचर्यायां रूढः । 'ज्ञाश्रुस्मृदृशां सन' इत्यात्मनेपदम् । विगता प्रकृतिः यस्याः सा विप्रकृता कोपितेत्यर्थः । प्रतीपं प्रतिकूलाचरितं मा स्म गमः मा गच्छ । दक्षिणा दाक्षिण्यवती । भोगेषु सुखेषु अनुत्सेकिनी अनहंकारिणी । एवं एवंप्रकारेण । वामाः वक्राः प्रतिकूला इत्यर्थः । आधयः मनःपीडाः । एतावानेव वधूजनस्योपदेशः । वत्से एतत्खलु सर्वमवधारय । तात इत एव किं प्रियंवदानसूये निवर्तिष्येते । कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलितेव चन्दनलता देशान्तरे जीवितं धारयि-

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ १९ ॥

(शकुन्तला पितुः पादयोः पतति ।)

**काश्यपः**—यदिच्छामि ते तदस्तु ।

**शकुन्तला**—(सख्यावुपेत्य) हला, दुवे वि मं समं एव्व परिस्सजह ।

(सख्यावुपेत्य) हला, द्वे अपि मां सममेव परिष्वजेथाम् ।

**सख्यौ**—(तथा कृत्वा) सहि, जइ णाम सो राआ पच्चहिण्णाणमन्थरो भवे तदा से इमं सणामहेअङ्किअं अङ्गुलीअअं दंसेहि ।

(तथा कृत्वा) सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्तदास्मै स्वनामधेयाङ्कितमङ्गुलीयकं दर्शय ।

**शकुन्तला**—हळा, इमिणा संदेहेण वो आकम्पिदम्हि ।

सख्यौ, अनेन संदेहेन वामाकम्पितास्मि ।

**सख्यौ**—मा भाआहि । अदिसिणेहो पावसङ्की ।

मा भैषीः । अतिस्नेहः पापशङ्की ।

---

ष्यामि । **अभिजन इत्यादि** ॥ विभवगुरुभिः विभवमहद्भिः कृत्यैर्व्यापारैः आकुला संसभ्रमा । शुचं शोकं न गणयिष्यासि न विचारयसि । सख्यौ द्वे अपि मां सममेव परिष्वजेथाम् । सममेवेत्यनेन सख्योः स्नेहसाम्यमुक्तम् । सखि, यदि स राजा प्रत्यभिज्ञामन्थरो भवेत् तदाऽस्मै स्वनामधेयाङ्कितमङ्गुलीयकं दर्शय । सख्यौ अनेन संदेशेन वामाकम्पितास्मि । मा भैषीः । अतिस्नेहः पापाशङ्की ।

**शार्ङ्गरवः**—युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

**शकुन्तला**—(आश्रमाभिमुखी स्थित्वा)

तादं, कदा णु खु भूओ वि तवोवणं देक्खिस्सं ।

तात, कदा नु खलु भूयोऽपि तपोवनं द्रक्ष्यामि ।

**काश्यपः**—श्रूयताम् ।

**भूत्वा चिराय चतुरन्तमहीसपत्नी**
**दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।**
**भर्त्रा तदर्पितकुटुम्बभरेण सार्धं**
**शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ २० ॥**

**गौतमी**—जादे, परिहीअदि दे गमणवेला । णिवत्तेहि पिदरं । अहवा चिरेण वि पुणो पुणो एसा एव्वं मन्तइस्सदि । णिवत्तदु भवं ।

जाते, परिहीयते ते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते । निवर्ततां भवान् ।

**काश्यपः**—वत्से, उपरुध्यते तपोऽनुष्ठानम् ।

---

तात कदा नु खलु भूयोऽपि तपोवनं द्रक्ष्यामि । **भूत्वा चिरायेत्यादि** ॥ चतुरन्तमहीसपत्नी चत्वारोऽन्ताः यस्याः सा तथोक्ता । समस्तेत्यर्थः । सा चासौ मही च तस्याः सपत्नी भूत्वा दौष्यन्तिं दुष्यन्तस्यापत्यम् । 'अत इञ्' इतीञ्प्रत्ययः । अप्रतिरथं अप्रतिराथिकम् । अत्र रथशब्देन रथिको लक्ष्यते । निवेश्य विवाह्य । 'निवेशः स्याद्विवाहे च वेशने सदनेऽपि च' इति भागुरिः । तथा च रघुवंशे—'संनिवेश्य चतुरोऽपि तत्र सः' इति । तस्मिन् तनयेऽर्पितः आरोपितः कुटुम्बस्य पोष्यवर्गस्य राज्याङ्गानां भरो भारो येन स तथोक्तः तेन । जाते परिहीयते ते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि

**शकुन्तला**—(भूयः पितरमाश्लिष्य) भूओ वि तवच्चरणपीडिदं ताद-
स्स सरीरं अदिमेत्तं मम किदे उक्कण्ठिदं भविस्सदि ।

(भूयः पितरमाश्लिष्य) भूयोऽपि तपश्चरणपीडितं तातस्य शरीर-
मतिमात्रं मम कृते उत्कण्ठितं भविष्यति ।

**काश्यपः**—(सनिःश्वासं)

**शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम् ।**
**उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २१ ॥**

गच्छ । शिवास्ते पन्थानः सन्तु ।

(निष्क्रान्ता शकुन्तला सहयायिनश्च

**सख्यौ**—(शकुन्तलां विलोक्य)

हद्धी हद्धी । अन्तरिदा सउन्दला वणराईए ।

हा धिक्, हा धिक् । अन्तरिता शकुन्तला वनराज्या ।

**काश्यपः**—(सनिःश्वासं) अनसूये, गतवती वां सखी । निगृह्य
शोकमनुगच्छतं मां प्रस्थितम् ।

**उभे**—ताद, सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पवि-
सामो ।

तात, शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

**काश्यपः**—स्नेहप्रवृत्तिरेवंदर्शिनी । (सविमर्शं परिक्रम्य) हन्त भोः,
शकुन्तलां पतिकुलं प्रति विसृज्य लब्धमिदानीं स्वास्थ्यम् ।

---

पुनरेषा एवमामन्त्रयते । निवर्ततां भगवान् । भूयोऽपि तपश्चरणपीडितं तातस्य शरीरमतिमात्रं मम कृते उत्कण्ठितं भविष्यति । कृत इत्यव्ययम् । अर्थे कृते च तादर्थ्ये इत्युक्तत्वात् । **शममेष्यतीत्यादि** ॥ स्पष्टोऽर्थः । हा धिक् । हा धिक् । हद्धीति निर्वेदे । अन्तरिता प्रियसखी शकुन्तला वनराज्या ।

कुतः—

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २२ ॥

Trust (इति निष्क्रान्ताः सर्वे ।)

इति चतुर्थोऽङ्कः ।

---

तात शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः । **अर्थो हीत्यादि** ॥ हि यस्मात्कारणात् कन्या परकीय एवार्थः परस्यैव धनं तस्मात् शकुन्तलां परिग्रहीतुः पत्युः संप्रेष्य पत्युः सकाशं प्रस्थाप्य स्थितवतो ममान्तरात्मा अन्तःकरणं प्रत्यर्पितन्यास इव प्रत्यर्पितः न्यासः उपनिधिर्येन स तथोक्तः । विशदो जातः । विशदः प्रसन्नः निश्चिन्त इत्यर्थः । अत्र परिग्रहीतुः संप्रेष्येत्यनेन उत्तराङ्कादौ प्रवेक्ष्यतो राजपात्रस्य सूचितत्वात् अङ्कास्यं नामार्थोपक्षेपकमुक्तं भवति । यथोक्तं—'अङ्कान्तपात्रेणाङ्कास्यमुत्तराङ्कार्थसूचनात्' इति ॥

॥ इति निष्क्रान्ताः सर्वे ॥

इति चतुर्थोऽङ्कः ।

## ॥ पञ्चमोऽङ्कः ॥

(ततः प्रविशत्यासनस्थो राजा विदूषकश्च ।)

**विदूषकः**—(कर्णं दत्वा) भो वअस्स, संगीदसालंदरे अवहाणं देहि । कलविसुद्धाए गीदीए सरसंजोओ विअ सुणीअदि । जाणे तत्तहोदी हंसपदिआ वण्णपरिअअं करेदित्ति ।

(कर्णं दत्वा) भो वयस्य, संगीतशालान्तरे अवधानं देहि । कलविशुद्धाया गीत्याः स्वरसंयोग इव श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

**राजा**—तूष्णीं भव । यावदाकर्णयामि ।

(आकाशे गीयते ।)

**अहिणवमहुलोलुवो तुमं तह परिचुम्बिअ चूअमञ्जरिं ।**
**कमलवसइमेत्तणिव्वुदो महुअर विम्हरिओ सि णं कहं ॥ १ ॥**

अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥ १ ॥

---

### ॥ अथ पञ्चमोऽङ्कः ॥

कविरिदानीमङ्कान्तरमारभते—**ततः प्रविशतीत्यादि** ॥ भो वयस्य संगीतशालान्तरे अवधानं देहि । कलविशुद्धायाः संगीत्याः स्वरसंयोग इव श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति । 'अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम् । कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥' अनया ध्रुवागीत्या हंसपदिका मधुकरव्याजेन आत्मानं विस्मृतवन्तं राजानमुपालभत इति गम्यते । अनेन गम्यमानार्थेन राज्ञः आगामिन्याः शकुन्तलाया विस्मरणं गम्यते । तदेषा विस्मृतावान्तरी ध्रुवा ।

**राजा**—अहो रागपरिवाहिणी गीतिः ।

**विदूषकः**—किं दाव गीदीए भवदा अवगदो अक्खरत्थो ।

किं तावद्गीत्या भवता अवगतोऽक्षरार्थः ।

**राजा**—(स्मितं कृत्वा) सकृत्कृतप्रणयोऽयं जनः । तदस्या देवीं वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे माढव्य मद्वचनादुच्यतां हंसपदिका—निपुणमुपालब्धोऽस्मीति ।

**विदूषकः**—जं भवं आणवेदि । (इत्युत्थाय) भो वअस्स, गहीदस्स ताए परकेरएहिं हत्थेहिं सिहण्डए अच्छराए वीदराअस्स विअ णत्थि मे मोक्खो ।

यद्भवानाज्ञापयति । (इत्युत्थाय) भो वयस्य, गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके अप्सरसा वीतरागस्येव नास्ति मे मोक्षः ।

**राजा**—गच्छ । नागरिकवृत्त्या संज्ञापयैनाम्

---

यथोक्तं—'सूच्येऽपि पात्रे भेदानां रसभावप्रकाशिनी । या गीतिः सा ध्रुवा तुल्यसंविधानविशेषणा ॥ प्रावेशिक्याक्षेपिकी च तथा प्रासादकीति च । नैष्क्रामक्यान्तरी चेति तासां लक्षणमुच्यते ॥ प्रवेशसूचिकाङ्कादौ ध्रुवा प्रावेशिकी मता । प्रसङ्गमध्येऽन्यार्थस्याक्षेपादाक्षेपकी मता ॥ प्रासादकीति पात्राणां व्याकुलानां प्रसादनात् । निष्क्रामसूचिकान्ते च ध्रुवा नैष्क्रामिकी भवेत् ॥ विदिते विस्मृते कोपे प्रसादे संगमे मदे । दोषप्रच्छादनादौ च गीयते या तु सान्तरी ॥' इति । रागपरिवाहिनी रागं रञ्जकत्वं परिवाहयति प्रवाहयतीति तथोक्ता । रागसंपूर्णेत्यर्थः । किं तावत् गीत्या भवताऽवगतोऽक्षरार्थः । सकृत् कृतः एकवारकृतः प्रणयो विस्रम्भो यस्मिन्स तथोक्तः । अनेन उपभुक्त इति लक्ष्यते । यद्भवानाज्ञापयति । भो वयस्य गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके अप्सरसा वीतरागस्येव नास्ति मे मोक्षः । नागरिकस्य प्रवीणस्य वृत्त्या रीत्या । 'नगरात् कुत्सनप्रावीण्ययोः' इति

**विदूषकः**—का गई । का गतिः । [इति निष्क्रान्तः ।

**राजा**—(आत्मगतं) किं नु खलु गीतार्थमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा ।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥

[इति पर्याकुलस्तिष्ठति ।

(ततः प्रविशति कञ्चुकी ।)

**कञ्चुकी**—अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लबगतेरवलम्बनार्था ॥ ३ ॥

---

ठक्प्रत्ययः । संज्ञापय आवेदय । का गतिः । **रम्याणीति** ॥ रम्याणि मनोहराणि । रूपाणीति शेषः । सुखितोऽपि प्रियासमेतोऽपि । यत् यस्मात् पर्युत्सुको भवति सोत्कण्ठो भवति । तत्तस्मात् । भावस्थितानि आत्मनिष्ठानि । चेतसा मनसा स्मरति चिन्तयति । इष्टजनसंगमेऽपि रम्यमधुरशब्दानुभवेन पर्युत्सुकत्वस्याविर्भावात् जन्तुर्नूनं भावनिष्ठजन्मान्तरस्नेहानबोधपूर्वं मनसा स्मरतीत्युत्प्रेक्षत इत्यनुसंधेयम् । अनेन राज्ञः शकुन्तलास्नेहः जन्मान्तरवत्तिरोहित इति गम्यते । **आचार इत्यादि** ॥ बहुतिथे बहुसंख्यापूरके । 'तस्य पूरणे डट्' इति विहितस्य डटो 'बहुपूगगणसंघस्य तिथुक्' इति सुगमः । प्रस्थानविक्लबगतेः—प्रस्थाने संचारे विक्लबा विह्वला गतिः पदन्यासो यस्य स तथोक्तस्तस्य । वार्धकव्यतिरेकेण स्खलितगतेरित्यर्थः । अवलम्बनार्था

भोः, कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम् । अथवाऽविश्रमो लोकतन्त्राधिकारः । कुतः—

**भानुः सकृद्युक्ततुरङ्ग एव रात्रिंदिवं गन्धवहः प्रयाति ।**
**शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥**

यावन्नियोगमनुतिष्ठामि । (परिक्रम्यावलोक्य) एष देव

**प्रजाः प्रजाः स्वा इव तन्त्रयित्वा**
**निषेवते शान्तमना विविक्तम् ।**
**यूथानि संचार्य रविप्रतप्तः**
**शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५ ॥**

(उपगम्य) जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः ।

---

आधाराय जाता । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च वक्तव्या' इति समासः । लोकतन्त्राधिकारः लोकतन्त्रं प्रयोगः । रक्षाकर्म, तस्मिन्नधिकारो नियोगः । अविश्रमः विश्रान्तिरहितः । कुत इति प्रश्ने । तदेवोपपादयति—**भानुरित्यादि** ॥ सकृदेकवारमेव युक्ततुरङ्गः संनद्धाश्वः । गन्धवहो वायुः । रात्रिंदिवमिति अचतुरेत्यादिना निपातनात्साधुः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । षष्ठांशो वृत्तिर्जीवनं यस्य स तथोक्तस्तस्य । राज्ञ इत्यर्थः । एषः अयं लोकतन्त्राधिकारे विश्रमाभावः धर्मो न्याय्यः । **प्रजा इत्यादि** ॥ प्रजाः जनान् स्वाः प्रजा इव स्वकीयान्यपत्यानीव तन्त्रयित्वा व्यापार्य । स्वेषु कर्मसु नियोज्येत्यर्थः । स्वाः प्रजा इत्यनेन वात्सल्यं गम्यते । शान्तमनाः शान्तचित्तः ।

श्रुत्वा देवः प्रमाणम् ।

राजा—(सादरं) किं काश्यपसंदेशहारिणः ।

कञ्चुकी—अथ किम् ।

राजा—तेन हि मद्वचनादुच्यतामुपाध्यायः सोमरातः। अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्येतांस्तपस्विजनदर्शनोचिते देशे प्रतिपालयामि ।

कञ्चुकी—यदाज्ञापयति देवः । [इति निष्क्रान्तः ।

राजा—(उत्थाय) वेत्रवति, अग्निशरणमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो । इत इतो देवः ।

राजा—(परिक्रामति । अधिकारखेदं निरूप्य) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखोत्तरैव । कुतः,

**औत्सुक्यमात्रमवसाययति प्रतिष्ठा**
**क्लिश्नाति लब्धपरिपालनवृत्तिरेवम् ।**
**नातिश्रमापनयनाय न च श्रमाय**
**राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ६ ॥**

---

विविक्तं विजनप्रदेशं निषेवते आश्रयते । देवः प्रमाणं प्रमाता । यत्कर्तव्यं तज्जानातीत्यर्थः । इत इतो देवः । **औत्सुक्यमात्रमित्यादि** ॥ प्रतिष्ठा आस्पदं राजभाव इत्यर्थः । औत्सुक्यमात्रं उत्सुकत्वमेव अवसाययति नाशयति । लब्धस्य परिपालनाय रक्षणाय वृत्तिर्व्यापारः क्लिश्नाति खेदयत्येव । तदेव विशदयति—स्वहस्तधृतदण्डमातपत्रमिव राज्यमतिश्रमापनयनाय न । श्रमाय

(नेपथ्ये)

**वैतालिकौ**—विजयतां देवः ।

**प्रथमः**—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ७ ॥

**द्वितीयः**—

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ८ ॥

**राजा**—एते क्लान्तमनसः पुनर्नवीकृताः स्मः । [इति परिक्रामति ।

**प्रतीहारी**—एसो अहिणवसम्मज्जणसस्सिरीओ सण्णिहिदहोमधेणू अग्गिसरणालिन्दो । इदो आरुहदु देवो ।

---

च न । भवतीति शेषः । **स्वसुखेत्यादि** ॥ हेतोरित्यत्र शेषे षष्ठी । **नियमयसीति** ॥ आत्तदण्डः गृहीतदण्डनीतिः । विमार्गप्रस्थितान् विरुद्धमार्गप्रयातान् अन्यायप्रवर्तिन इत्यर्थः । नियमयसि दमयसि । विवादं कलहं प्रशमयसि निवारयसि । रक्षणाय कल्पसे संपद्यसे । 'क्लृपेः संपद्यमाने चतुर्थी वक्तव्या' इति चतुर्थी । अतनुषु विभवेषु सत्सु ज्ञातयो बान्धवाः सन्तु नाम संभवन्तु । कुक्षिंभरिभिस्तैः किं प्रयोजनमिति भावः । प्रजानां बन्धुकृत्यं तु विमार्गनियमनादिकं तु त्वयि परिसमाप्तं पर्यवसितम् । तथा च 'येन येन—' इत्यादिनाऽयमर्थो लभ्यते । एते क्लान्तमनसः श्रमभावेन क्लिष्टमनसः पुनः

एषोऽभिनवसंमार्जनसश्रीकः संनिहितहोमधेनुरग्निशरणालिन्दः ।

इत आरोहतु देवः ।

राजा—(आरुह्य परिजनांसावलम्बी तिष्ठति ।) वेत्रवति, किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ९ ॥

प्रतीहारी—सुअरिदाहिणन्दिणो इसीओ देवं सभाजइदुं आअदेत्ति तक्केमि ।

सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि ।

(ततः प्रविशन्ति गौतमीसहितां शकुन्तलां पुरस्कृत्य मुनयः ।
पुरतश्चैषां पुरोहितः कञ्चुकी च ।)

कञ्चुकी—इत इतो भवन्तः ।

---

भूयोऽपि नवीकृताः अनयोः सूनृतवचनेनाखिन्नमनसः कृता इत्यर्थः । अभिनवसंमार्जनसश्रीकः संनिहितहोमधेनुरयमग्निशरणालिन्दः । इत आरोहतु देवः । **किं तावदित्यादि** ॥ उपोढतपसां व्रतिनां ऋषीणां तपो विघ्नैः विघातैः दूषितं विहतं किम् । किंशब्दो वितर्के । धर्मारण्यचरेषु प्राणिषु जन्तुषु विषये येनकेनचिद्धूर्तेन असत् अन्याय्यं कर्म उत चेष्टितमाचरितं किमु । वीरुधामोषधीनां प्रसवः पुष्पफलादि ममापचरितैः दुराचारैः आहोस्वित् विष्टम्भितः प्रतिषिद्धः किमु । इति अनेन प्रकारेण आरूढबहुप्रतर्कमधिगतानेकवितर्कं मे मनः अपरिच्छेदेन निर्णयाभावेन आकुलं व्याकुलम् । अनेन वितर्केण रूपमिति संध्यङ्गमुक्तं भवति । तदुक्तं—रूपं वितर्कवद्वाक्यमिति । सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि । **महाभाग**

**शार्ङ्गरवः**—शारद्वत,

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १० ॥

**शारद्वतः**—स्थाने खलु भवान्पुरप्रवेशादित्थंभूतः । अहमपि

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसंगिनमवैमि ॥ ११ ॥

**शकुन्तला**—(निमित्तं सूचयित्वा)

अम्महे, किं वि वामेदरं मे णअणं विआरेदि ।

अहो, किमपि वामेतरं मे नयनं विकरोति ।

**गौतमी**—जादे पडिहदं अमङ्गलं । सुहाइ दे भत्तुकुलदेवदाओ वितरन्दु ।

जाते, प्रतिहतममङ्गलम् । शुभानि ते भर्तृकुलदेवता वितरन्तु ।

(इति परिक्रामन्ति ।)

---

**इत्यादि** ॥ महाभागः महाभाग्यः । अभिन्नस्थितिः अविहतमर्यादः । 'मार्यादा धारणा स्थितिः' इत्यमरः । वर्णानां ब्राह्मणादीनां मध्ये अपकृष्टोऽपि अकिंचनोऽपि अपथममार्गं न भजते । सर्वोऽपि संसर्गयोग्य एवेत्यर्थः । तथापि एवमपि । शश्वत् परिचितमासेवितं विविक्तं विजनं येन तत् तथोक्तं तेन मनसोपलक्षितः । जनाकीर्णं प्रजासंकुलमिदं गृहं हुतवहपरीतमिव अनलाक्रान्तमिव मन्ये । प्रवेष्टुं दुःसहमित्यर्थः । **अभ्यक्तमिवेत्यादि** ॥ स्पष्टोऽर्थः । अहो आश्चर्यम् । किमपि वामेतरं मे नयनं विकरोति । जाते प्रतिहतममङ्गलम् । शुभानि ते भर्तुः कुलदेवता वितरन्तु । **भो**

**पुरोहितः**—(राजानं निर्दिश्य) भोस्तपस्विनः, असावत्रभवान्वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनम् ।

**शार्ङ्गरवः**—भो महाब्राह्मण, काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः । कुतः ।

**भवन्ति नम्रास्तरवः फलागमै-**
**र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः**
**स्वभाव एवैष परोपकारिणाम् ॥ १२ ॥**

**प्रतीहारी**—देव, पसण्णमुहराआ इसिओ दीसन्ति । ता विस्सद्धकज्जा एदे ।

देव, प्रसन्नमुखरागा ऋषयो दृश्यन्ते । तस्माद्विस्रब्धकार्या एते ।

**राजा**—(शकुन्तलां दृष्ट्वा) अथात्रभवती,

**का स्विदवकुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।**
**मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १३ ॥**

**प्रतीहारी**—देव, कुदूहलगब्भो मे तक्को पसीददि । दंसणिज्ज उण से आकिदी लक्खीअदि ।

---

**महाब्राह्मणेत्यादि** ॥ एतत्प्रत्युत्थानादिकं काममत्यर्थमभिनन्दनीयं भवतः तथापि वयमत्र मध्यस्थाः पक्षपातरहिताः सन्तः । ब्रूम इति शेषः । **भवन्ति नम्रा इति** ॥ स्पष्टोऽर्थः । देव प्रसन्नमुखरागा ऋषयो दृश्यन्ते । तस्माद् विस्रब्धकार्या एव । **का स्विदित्यादि** ॥ स्पष्टः । देव कुतूहलगर्भः कुतूहलं गर्भे यस्य स तथोक्तः । मे तर्कः प्रसीदति प्रतिभाति । दर्शनीया

देव, कुतूहलगर्भो मे तर्कः प्रसीदति । दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।

**राजा**—भवतु । अनिर्वर्णनीयं परकलत्रम् ।

**शकुन्तला**—(हस्तमुरसि कृत्वा आत्मगतं) हिअअ, किं एव्वं वेवासि अज्जउत्तस्स भावं अणवहारिअ । धीरं दाव होहि ।

(हस्तमुरसि कृत्वा आत्मगतं) हृदय, किमेवं वेपसे आर्यपुत्रस्य भावमनवधार्य । धीरं तावद्भव ।

**पुरोहितः**—(पुरो गत्वा) एते विधिवदर्चितास्तपस्विनः । कश्चिदेषामुपाध्यायसंदेशः । तं देवः श्रोतुमर्हति ।

**राजा**—अवहितोऽस्मि ।

**ऋषयः**—(हस्तानुद्यम्य) विजयस्व राजन् ।

**राजा**—सर्वानभिवादये ।

**ऋषयः**—इष्टेन युज्यस्व ।

**राजा**—अपि निर्विघ्नतपसो मुनयः ।

**ऋषयः**—

**कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।**
**तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥**

**राजा**—अर्थवान्खलु मे राजशब्दः । अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः ।

---

पुनरस्या आकृतिर्लक्ष्यते । अनिर्वर्णनीयं अदर्शनीयम् । हृदय किमेवं वेपसे आर्यपुत्रस्य भावमनवधार्य । धीरं तावद्भव । **कुतो धर्मक्रियेत्यादि** ॥ स्पष्टोऽर्थः । अत्र वाक्यस्योत्कर्षाश्रयत्वात् उदाहरणं नाम संध्यङ्गमुक्तम् । यथोक्तं वसन्तराजीये—'उत्कर्षेणान्वितं वाक्यमुदाहरण-

**शार्ङ्गरवः**—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्न-पूर्वमिदमाह ।

**राजा**—किमाज्ञापयति भगवान् ।

**शार्ङ्गरवः**—यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः—

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी**—अज्ज, किंवि वत्तुकामम्हि । ण खु मे वअणावआसो अत्थि । कहंत्ति ।

णावेक्खिदो गुरुअणो तुए इमाए ण पुच्छिदो बन्धू ।
एक्कक्कं एव्व चरिए भणामि किं एक्कमेक्कस्स ॥ १६ ॥

---

मिष्यते' इति । **स भवन्तमित्यादि** ॥ अनामयप्रश्नः पूर्वं यस्मिन्कर्मणि तत्तथोक्तम् । क्षत्रियमनामयं पृच्छेदिति मनुवचनम् । यथा—'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥' **यन्मिथ इत्यादि** ॥ भवान् उपायंस्त उदवहदिति यावत् । युवयोस्तत्कर्म मयानुज्ञातमनुमतम् । कुत इति प्रश्ने । **त्वमर्हतामित्यादि** ॥ प्राग्रसरः श्रेष्ठः । समानयन् संयोजयन् । वाच्यं निन्दाम् । आर्य किमपि वक्तुकामास्मि । न खलु मे वचनावकाशोऽस्ति । न खल्वित्यत्र काकुरनुमेया । अत्र शोकस्य विद्यमानत्वात् । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः । नापेक्षितो गुरुजनस्त्वया अनया न पृष्टा बन्धवः । एकैकमेव चरिते किं भणाम्ये-

आर्य, किमपि वक्तुकामास्मि। न खलु मे वचनावकाशोऽस्ति। कथमिति।

नापेक्षितो गुरुजनस्त्वयान्या न पृष्टो बन्धुः।
एकैकमेव चरिते भणामि किमेकैकस्य ॥

**शकुन्तला**—(आत्मगतं) किंणु खु अज्जउत्तो भणादि।

(आत्मगतं) किं नु खल्वार्यपुत्रो भणति।

**राजा**—किमिदमुपन्यस्तम्।

**शकुन्तला**—(आत्मगतं) पावओ क्खु वअणोवण्णासो।

(आत्मगतं) पावकः खलु वचनोपन्यासः।

**शार्ङ्गरवः**—तत्कथं किमिदं नाम। ननु भवन्त एव सुतरां लोकप्रवृत्तिनिष्णाताः

**सतीमपि ज्ञातिकुलैकसंश्रयां**
**जनोऽन्यथा भर्तृमतीं विशङ्कते।**
**अतः समीपे परिणेतुरिष्यते**
**तदप्रियापि प्रमदा स्वबन्धुभिः ॥ १७ ॥**

कैकस्य ॥ चरिते विवाहव्यापारे। एकैकमेव केवलावेव युवाम्। एकैकस्य किं भणामः। न किमपि वक्तव्यमस्ति। मिथः समयं युवामेव जानीथः। तदेतदर्थे के वयमित्यभिप्रायः। एकैकस्येत्यत्र 'वीप्सार्थात् तदन्सुपो मस्तु' इति वैकल्पिको मकारः। किं नु खल्वार्यपुत्रो भणति। पावकः खलु वचनोपन्यासः। किमिदं नामेति भवता यदुक्तं तत्कथमित्यन्वयः। कथमित्याक्षेपे। लोकप्रवृत्तिनिष्णाताः लोकव्यवहारकुशलाः। **सतीमपीत्यादि** ॥ भर्तृमतीं पतिमतीमपि ज्ञातीनां स्वजनानां पित्रादीनां कुलं गृहं एकः केवलः संश्रयो यस्यास्ताम्। अन्यथा अन्यप्रकारेण असतीति शङ्कते संदिग्धे। अतः अस्मात्कारणात् प्रमदा कान्ता तदप्रियापि तस्य भर्तुरप्रियापि अनिष्टापि स्वबन्धुभिः स्वकीयैः बान्धवैः परिणेतुः भर्तुः समीपे संनिधौ इष्यते वाञ्छ्यते। तया भर्तुः समीपस्थया भवितव्यमिति वाञ्छतीत्यर्थः।

**राजा**—किं चात्रभवती मया परिणीतपूर्वा ।

**शकुन्तला**—(सविषादमात्मगतं)

हिअअ, संपदं दे आदंको आसि ।

हृदय, सांप्रतं ते आतङ्क आसीत् ।

**शार्ङ्गरवः**—किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ।

**राजा**—कुतोऽयमसत्कल्पनाप्रश्नः ।

**शार्ङ्गरवः**—मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

**राजा**—विशेषेणाधिक्षिप्तोऽस्मि ।

**गौतमी**—जादे, मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओ उण्ठणं । तदो तुमं भट्टा अहिजाणिस्सदि ।

जाते, मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवकुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति । [इति यथोक्तं करोति ।

**राजा**—(शकुन्तलां निर्वर्ण्य, आत्मगतं)

**इदमुपनतमेवंरूपमक्लिष्टकान्ति**
**प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।**

---

हृदय सांप्रतं ते आतङ्क आसीत् । आतङ्को भयं सांप्रतं युक्तमासीदित्यर्थः । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । **किं कृतेत्यादि** ॥ कृते निर्वर्तिते कार्ये शकुन्तलापरिणयव्यापारे द्वेषः असहनत्वम् । किमिति प्रश्ने । धर्मं प्रति विमुखता वैमुख्यं किम् । अवज्ञा अवमानना कृता किमित्यर्थः । अयमसतः अविद्यमानस्य कल्पनया संभावनया कृतः प्रश्नः पृच्छा । 'तृतीया तत्कृतार्थेन गुणवचनेन' इति समासः । अमी विकाराः कृतकार्यद्वेषादयः ऐश्वर्येणाधिपत्येन मत्तेषु मदान्धेषु प्रायेण प्रायशो मूर्च्छन्ति व्याप्नुवन्ति ॥ जाते मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्ते अवकुण्ठनम् । तत् त्वां भर्ताऽभिज्ञास्यति । **इदमुपनतमित्यादि** ॥ अक्लिष्टकान्ति अनवद्यसौन्दर्यम् । अव्यवस्यन् अनिश्चिन्वन् । कुन्दं कुन्दकुसुमम् ।

भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ १९ ॥

(इति विचारयन्स्थितः ।)

**प्रतीहारी**—(जनान्तिकं) अहो धम्मावेक्खिदा भट्टिणो । ईदिसं णाम सुहोवणदं रूवं देक्खिअ को अण्णो विआरेदि ।

(जनान्तिकं) अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ।

**शार्ङ्गरवः**—राजन्, किमिति जोपमास्यते ।

**राजा**—भोस्तपोधन, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानमक्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

**शकुन्तला**—(सविषादमात्मगतं)

परिणए एव्व संदेहो । कुदो दाणिं मे दूराहिरोहिणी आसा ।

परिणय एव संदेहः । कुतो म इदानीं दूराधिरोहिण्याशा ।

**शार्ङ्गरवः**—मा तावत् ।

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।

---

अन्तस्तुषारमित्यनेन भ्रान्तिहेतुरुक्तः । हातुं त्यक्तुम् । अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति । जोषमास्यते तूष्णीं स्थीयते । परिणय एव संदेहः । कुतो म इदानीं दूराधिरोहिणी आशा । जायत इति शेषः। शङ्काया गम्यमानत्वात् संभ्रमो नाम संध्यङ्गमुक्तम् । 'शङ्कात्रासौ संभ्रमौ द्वौ' इति । कृताभिमर्शां कृतसंस्पर्शां कृतकरग्रहणामित्यर्थः । सुतां तनयामनुमन्यमानः मुनिः काश्यपः विमान्यो नाम तिरस्कार्यः किल । नामेति संभाव-

मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

**शारद्वतः**—शार्ङ्गरव, विरम त्वमिदानीम् । शकुन्तले, वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ।

**शकुन्तला**—(स्वगतं) इदं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण । अत्ता दाणिं मे सोअणिज्जो त्ति ववसिदं एदं । (प्रकाशं) अज्जउत्त, (इत्यर्धोक्ते—) संसइदे दाणिं ण एसो समुदाआरो । पोरव, जुत्तं णाम दे पुरा अस्समपदे सहावोत्ताणहिअअं इमं जणं समअपुव्वं प्पदारिअ संपदं ईरिसेहिं अक्खरेहिं पच्चाचक्खिदुं ।

(स्वगतं) इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन । आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् । (प्रकाशं) आर्यपुत्र, (इत्यर्धोक्ते—) संशयित इदानीं नैष समुदाचारः । पौरव, युक्तं नाम ते पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य सांप्रतमीदृशैरक्षरैः प्रत्याख्यातुम् ।

---

नायाम् । हेतुमाह—यस्मात् कारणात् स्वं स्वकीयं अर्थं प्रतिग्राहयता तदनु पुनरङ्गीकारयता येन मुनिना दृष्टः दस्युः चोर इव त्वं पात्रीकृतः अर्हीकृतः स मुनिरिति संबन्धः । अत्रानेन शार्ङ्गरवसंरम्भस्य गम्यमानत्वात् तोटकमिति संध्यङ्गमुक्तं भवति । यथोक्तम्—'संरम्भवचनं यत्तु तत्तोटकमुदीरितम्' इति । एवमवस्थान्तरं गते तादृशेऽनुरागे किं स्मारितेन । आत्मेदानीं शोचनीय इति व्यवसितं निश्चितमेतत् । आर्यपुत्र इत्यर्धोक्ते, इदानीं नैष समुदाचारः । पौरव युक्तं नाम ते पुरा आश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य सांप्रतमीदृशैररुंतुदैरक्षरैः प्रत्याख्यातुं निराकर्तुम् । **व्यपदे-**

**राजा**—(कर्णौ पिधाय) शान्तं पापम् ।

**व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।**
**कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥**

**शकुन्तला**—होदु जइ परमत्थदो परिग्गहसंकिणा तुए एव्वं पउत्तं, अहिण्णाणेण इमिणा तुह संदेहं अवणइस्सम् ।

भवतु यदि परमार्थतः परिग्रहशङ्किना त्वयैवं प्रवृत्तम्, अभिज्ञानेनानेन तव संदेहमपनेष्यामि ।

**राजा**—उदारम् ।

**शकुन्तला**—(मुद्रास्थानं परामृश्य)

हद्धि हद्धि अंगुलीअअसुण्णा मे अंगुली ।

हा धिक् हा धिक् । अङ्गुलीयकशून्या मे अङ्गुलिः ।

(सविषादं गौतमीमवेक्षते ।)

**गौतमी**—णूणं सक्कावदारब्भंदरे सईतित्थं वंदमाणाए तुह हत्थादो पब्भट्टं अंगुलीअअं ।

नूनं शक्रावताराभ्यन्तरे शचीतीर्थं वन्दमानायास्तव हस्तात्प्रभ्रष्टमङ्गुलीयकम् ।

**राजा**—(सस्मितं) इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

---

**शमित्यादि** ॥ व्यपदेशशब्दोऽत्र कुलप्रसिद्धौ वर्तते । तथा च वक्ष्यते—अथ कोऽस्य व्यपदेशः पुरुवंश एषः इति । आविलयितुं कलुषयितुम् । इमं जनमात्मानमित्यर्थः । पातयितुं पतितं कर्तुम् । किमीहसे किमिच्छसि । अत्रोपमामाह—कूलंकषा । भवतु यदि परमार्थतः परिग्रहशङ्किना त्वयैवं प्रवृत्तम् । अभिज्ञानेनानेन तव संदेहमपनेष्यामि । उदारं महद्वचनमित्यर्थः । अङ्गुलीयकशून्या मे अङ्गुलिः । ननु शक्रावताराभ्यन्तरे शचीतीर्थं वन्दमानायास्तव अग्रहस्तात् प्रभ्रष्टमङ्गुलीयकम् । स्त्रैणं स्त्रीजातिः । 'स्त्रीपुंसाभ्यां नञ्स्नञौ

**शकुन्तला**—एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे कहइस्सं ।

अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

**राजा**—श्रोतव्यमिदानीं संवृत्तम् ।

**शकुन्तला**—णं एक्कस्सिं दिअहे णोमालिआमंडवे णलिणीपत्तभाअणगदं उदअं तुह हत्थे संणिहिदं आसि ।

नन्वेकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

**राजा**—शृणुमस्तावत् ।

**शकुन्तला**—तक्खणं मह पुत्तकिदओ दीहापंगो णाम हरिणपोदओ उवट्ठिदो । तदो तुए दाव पुढमं एसो पिबदु त्ति अणुअंपिणा उवच्छंदिदो उदएण । ण उण सो दे अपरिअआदो हत्थब्भासं उवगदो । पच्चा तस्सिं एव्व मए गहीदे सलिले किदो देण पणओ । तदो इत्थं पहसिदो सि, सव्वो सगंधेसु विस्ससदि, दुवे वि खु आरण्णआ त्ति ।

तत्क्षणं मम पुत्रकृतको दीर्घापाङ्गो नाम हरिणपोतक उपस्थितः । ततस्त्वया तावत् प्रथममेष पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनः स ते अपरिचयात् हस्ताभ्याशमुपगतः । पश्चात्तस्मिन्नेव

---

भवनात्' इति नञ् । अत्रैव तावद्दर्शितं विधिना प्रभुत्वम् । अपरं ते कथयिष्यामि । श्रोतव्यमिदानीं संवृत्तम् । वर्तितं प्रकारः । कर्मणि क्तः । नन्वेकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् । तत्क्षणं मम पुत्रो दीर्घापाङ्गो नाम हरिणपोतक उपस्थितः । त्वया तावत् प्रथममेष पिबत्वित्यनुकम्पिना उपस्थापितम् । न पुनस्ते अपरिचयात् हस्ताभ्याशमुपगतः । पश्चात् तस्मिन्नेव मया गृहीते सलिले कृतस्तेन प्रणयः ।

मया गृहीते सलिले कृतस्तेन प्रणयः । तत इत्थं प्रहसितोऽस्मि —सर्वः सगन्धेषु विश्वसिति, द्वावपि खल्वारण्यकाविति ।

**राजा**—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः ।

**गौतमी**—महाभाअ, ण अरुहसि एव्वं मन्तिदुं । तवोवणसंवड्ढिदो अणभिण्णो अअं जणो केदवस्स ।

महाभाग, नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ।

**राजा**—तापसवृद्धे,

> **स्त्रीणामशिक्षितपटुत्वममानुषीषु**
> **संदृश्यते किमुत याः प्रतिबोधवत्यः ।**
> **प्रागन्तरिक्षगमनात्स्वमपत्यजात-**
> **मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥**

**शकुन्तला**—(सरोषं) अणज्ज, अत्तणो हिअआणुमाणेण पेक्खासि ।

---

तत इत्थं प्रहसितास्मि—सर्वः स्ववर्गेषु बहु विश्वसिति । द्वावपि खल्वारण्यकाविति । **एवमादिभिरित्यादि** ॥ अत्र नष्टस्मृतेर्दुष्यन्तस्य शकुन्तलावचनं वञ्चनारूपेण प्रतीयमानमिति अधिबलं नाम संध्यङ्गमुक्तम् । यथोक्तं—वञ्चनादधिबलमिति । महाभाग नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितः अनभिज्ञोऽयं जनः कैतवस्य । **स्त्रीणामित्यादि** ॥ अमानुषीषु मनुष्यजातिव्यतिरिक्तासु तिर्यग्जातिष्वित्यर्थः । प्रतिबोधवत्यः शिक्षितपाटवा इति किमुत किमुच्यत इत्यर्थः । अमानुषीणामशिक्षितपटुत्वे दृष्टान्तमाह—स्वं स्वकीयं अपत्यजातं अपत्यसमूहम् । अन्यैः अन्यजातीयैः द्विजैः पक्षिभिर्वायसैरित्यर्थः । अत्रापत्यपोषणमपुरुषक्रियेति नाशङ्कनीयम् । पुरुषपक्षिणामपत्यवात्सल्यस्य विद्यमानत्वात् । अनार्य आत्मनो हृदयानुमानेन सर्वं पश्यसि । क इदानी-

को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पडिवज्जिस्सदि ।

(सरोषं) अनार्य, आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ।

**राजा**—(आत्मगतं) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

**मय्येव विस्मरणदारुणचित्तवृत्तौ**
**वृत्तं रहः प्रणयमप्रतिपद्यमाने ।**
**भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या**
**भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥**

(प्रकाशं) भद्रे प्रथितं दुष्यन्तचरितम् । तथापीदं न लक्ष्ये ।

**शकुन्तला**—सुट्ठु दाव सच्छंदआरिणी किद ह्मि । जा अहं इमस्स पच्चएण मुहमहुणो हिअअविसस्स हत्थब्भासं उवगदा ।

सुष्ठु तावत् स्वच्छन्दचारिणी कृतास्मि । याहमस्य प्रत्ययेन मुखमधोर्हृदयविषस्य हस्ताभ्याशमुपगता ।

(इति पटान्तेन मुखमावृत्य रोदिति ।)

**शार्ङ्गरवः**—इत्थमात्मकृतं प्रतिहतं चापलं दहति ।

---

मन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रविशति । **मय्येवेत्यादि** ॥ विस्मरणेन दारुणा क्रूरा चित्तवृत्तिर्यस्य स तथोक्तस्तस्मिन् । विस्मरणज्ञानं शकुन्तलावचनज्ञानमात्रप्रमाणादित्यनुसंधेयम् । अतिरुषा अत्यन्तं रुट् कोपो यस्याः सा तथोक्ता तया । भग्नं त्रुटितम् । सुष्ठु तावत् स्वच्छन्दचारिणी कृतास्मि । याहमस्य प्रत्ययेन मुखमधोः हृदयविषस्य हस्ताभ्याशमुपगता । रोदिति

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥

**राजा**—अयि भोः, किमत्रभवतीप्रत्ययादेवास्मान्संयुतदोषाक्षरैः क्षिणुथ ।

**शार्ङ्गरवः**—(सासूयं) श्रुतं भवद्भिरधरोत्तरम् ।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ २५ ॥

**राजा**—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ।

**शार्ङ्गरवः**—विनिपातः ।

**राजा**—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयम् ।

**शारद्वतः**—शार्ङ्गरव, किमुत्तरोत्तरेण । अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयम् । (राजानं प्रति)

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

---

रोदनं करोतीत्यर्थः । **अतः परीक्ष्येत्यादि** ॥ अतः उक्तात्कारणात् । रहः रहसि संगतं संगमः । रहस्यसंगमस्य विशेषपरीक्षणराहित्येन दोषं दर्शयति । एवमास्मिन् राजनि यथा सौहृदं वैरीभवति तथैवेत्यर्थः । **आजन्मन इति** । आजन्मनः जन्मप्रभृति शाठ्यं कैतवम् अशिक्षितः अनभ्यासितः । परातिसंधानं परवञ्चनम् । 'व्यलीकमतिसंधानं वञ्चनं च प्रतारणम्' इत्यमरः । विद्येति शास्त्रमिति यैः अधीयते अभ्यस्यते । आप्तवाचः सन्तु किल भवेयुर्नाम । अभ्युपगतमङ्गीकृतम् ।

गौतमि, गच्छाग्रतः ।

(इति प्रस्थिताः ।)

**शकुन्तला**—हं दाव इमिणा किदवेण विप्पलद्ध म्हि । तुम्हे वि मं परिच्चअह ।

अहं तावदनेन कितवेन विप्रलब्धास्मि । यूयमपि मां परित्यजथ ।

(इत्यनुप्रतिष्ठते ।)

**गौतमी**—(स्थित्वा) वच्छ सङ्गरव, अणुगच्छदि इअं क्खु णो करुणपरिदेविणी सउन्दला । पच्चादेसपरुसे भत्तुणि किं वा मे पुत्तिआ करेदु ।

(स्थित्वा) वत्स शार्ङ्गरव, अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु ।

**शार्ङ्गरवः**—(सरोषं निवृत्य) किं पुरोभागे, स्वातन्त्र्यमवलम्बसे ।

(शकुन्तला भीता वेपते ।)

**शार्ङ्गरवः**—शकुन्तले,

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।

---

विनिपातः प्रत्यवायः । **तदेषेत्यादि** ॥ स्पष्टः । अहं तावदनेन कितवेन विप्रलब्धास्मि । यूयमपि मां परित्यजथ । वत्स शार्ङ्गरव, अनुगच्छतीयं नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु । हे पुरोभागिनि दुष्टे स्वातन्त्र्यं स्वच्छन्दतामवलम्बसे । भीता वेपते कम्पते । अनेन उद्वेगो नाम संध्यङ्गमुक्तम् । यथोक्तं भीतिरुद्वेगकारिणीति । **यदि यथा वदतीत्यादि** ॥ क्षितिपो यथा वदति त्वं तथासि यदि तद्विधा भवसि चेत् । उत्कुलया कुलमतिक्रान्तया । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः' इति

अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

तिष्ठ । साधयामो वयम् ।

राजा—भोस्तपस्विन्, किमत्रभवतीं विप्रलभसे ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

शार्ङ्गरवः—यदि पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवांस्तदा कथमधर्मभीरुः ।

राजा—(पुरोहितं प्रति) भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

पुरोहितः—(विचार्य) यदि तावदेवं क्रियताम् ।

राजा—अनुशास्तु मां भवान् ।

पुरोहितः—अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् । त्वं साधुभिरादिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो

---

परवल्लिङ्गताप्रतिषेधः । आत्मनो भवत्याः व्रतं चरितं शुचि शुद्धं अथ तु वेत्सि जानासि यदि । दास्यं दास्याः कर्म । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ्प्रत्ययः । क्षमं युक्तम् । **कुमुदानीत्यादि** ॥ स्पष्टः । पूर्ववृत्तं पूर्वचरितं शकुन्तलापरिग्रहमित्यर्थः । अन्यस्याः कान्तायाः संगात् । 'सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावो वक्तव्यः' इति अन्यशब्दस्य पुंवद्भावः । **मूढः स्यामित्यादि** ॥ पांसुलः पापः । 'सिध्मादिभ्यश्च' इति लच्-

भविष्यति, अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

**राजा**—यथा गुरुभ्यो रोचते ।

**पुरोहितः**—वत्से, अनुगच्छ माम् ।

**शकुन्तला**—भअवदि वसुहे, देहि मे विवरं ।

भगवति वसुधे, देहि मे विवरम् ।

(इति रुदती प्रस्थिता । निष्क्रान्ता सह पुरोधसा तपस्विभिश्च ।)

(राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति ।)

(नेपथ्ये ।)

आश्चर्यमाश्चर्यम् ।

**राजा**—(आकर्ण्य) किं नु खलु स्यात् ।

(प्रविश्य ।)

**पुरोहितः**—(सविस्मयं) देव, अद्भुतं खलु संवृत्तम् ।

**राजा**—किमिव ।

**पुरोहितः**—देव, परावृत्तेषु कण्वशिष्येषु ।

**सा निन्दन्ती स्वानि भाग्यानि बाला**
**बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।**

**राजा**—किं च ।

**पुरोहितः**—

**स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-**
**दाक्षिप्यैनां ज्योतिरेकं तिरोऽभूत् ॥ ३० ॥**

---

प्रत्ययः । भगवति वसुन्धरे देहि मे विवरम् । **सा निन्दन्तीत्यादि ॥**
बाहूत्क्षेपं—'स्वाङ्गे ध्रुवे' इति णमुल्प्रत्ययः । स्त्रियः संतिष्ठन्त्यस्मिन्निति स्त्रीसं-

(सर्वे विस्मयं रूपयन्ति ।)

**राजा**—भगवन्, प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान् ।

**पुरोहितः**—(विलोक्य) विजयस्व । [इति निष्क्रान्तः ।

**राजा**—वेत्रवति, पर्याकुलोऽस्मि । शयनभूमिमार्गमादेशय ।

**प्रतीहारी**—इदो इदो देवो । इत इतो देवः । [परिक्रामति ।

**राजा**—(स्वगतं)

**कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।**
**बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥ ३१ ॥**

(इति निष्क्रान्तौ ।)

**इति पञ्चमोऽङ्कः ।**

---

स्थानम् अप्सरस्तीर्थं, तीर्थस्य नाम । आरादन्तिके । **कामं प्रत्यादिष्टामित्यादि** ॥ प्रत्यादिष्टां निराकृतां मुनेस्तनयां परिग्रहं काममत्यर्थं न स्मरामि न विचारयामि । बलवत् सुष्ठ दूयमानं व्यथमानं मे हृदयं प्रत्याययति ज्ञापयतीव । अत्र मुहुरन्वेषितस्य बीजस्य योजनात् आक्षेप इति संध्यङ्गमुक्तं भवति । यथोक्तं—'आक्षेपो बीजयोजनम्' इति । अत्र शकुन्तलानिर्गमनेन वस्तुविच्छेदे सति राज्ञो दूयमानहृदयत्वमुत्तराङ्कवस्तुहेतुत्वात् बिन्दुरित्यनुसंधेयम् ॥

॥ इति निष्क्रान्तौ ॥

॥ इति पञ्चमोऽङ्कः ॥

## ॥ षष्ठोऽङ्कः ॥

(ततः प्रविशति नागरिकः स्यालः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च ।)

**रक्षिणौ**—(ताडयित्वा) हंहो कुम्भीलअ, कहेहि कहिं तुए एशे मणिबन्धणुक्किण्णणामहेए लाअकीए अङ्गुलीअए शमाशादिए ।

अहो कुम्भीलक, कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ।

**पुरुषः**—(भीतिनाटितकेन) पशीदन्तु भावमिश्शे । अहके णेलिशकम्मकालिए ।

(भीतिनाटितकेन) प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

**प्रथमः**—किंखु सोहणे बम्हणेत्ति कलिअ रण्णा पडिग्गहे दिण्णे ।

---

॥ अथ षष्ठोऽङ्कः ॥

कविरिदानीमङ्कान्तरमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादि** ॥ नागरिकः नगरे नियुक्तः । 'तत्र नियुक्तः' इति ठक् । स्यालः राष्ट्रियः कर्तेत्यर्थः । अहो कुम्भीलक चोर कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् । मणिर्बध्यतेऽस्मिन्निति मणिबन्धनं मणिस्थापनस्थानं, तत्र उत्कीर्णं लिखितं नामधेयं यस्य तत्तथोक्तम् । रक्षिणोरनयोरतिनीचपात्रत्वान्मागधीभाषा । 'म्लेच्छान्त्यजपिशाचादौ पैशाची वापि मागधी ।' शमाशाइदे इत्यत्र मागध्यां शौरसेनवदिति अतिदेशात् तकारस्य दकारः । अहके णेलिशकम्मकालिए । एलिशेत्यत्र सोश्चाविति सकारस्य शकारः । एलिशेत्यत्र शकारस्य शोःसलिति प्राकृते शषसानां विहितः सकारो गृह्यते । प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी । अहके इति अस्मच्छब्दप्रथमैकवचनस्यादेशः । अहंगेहं

किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः ।

**पुरुषः**—शुणुह दाणिं । हगे शक्कावदालातित्थवाशी धीवले ।

श्रृणुतेदानीम् । अहं शक्रावतारतीर्थवासी धीवरः ।

**द्वितीयः**—पाडच्चल, किं अम्हेहिं जादी पुच्छिदा ।

पाटच्चर, किमस्माभिर्जातिः पृष्टा ।

**स्यालः**—सूअअ, कहेदु शव्वं अणुक्कमेण । मा णं अन्तला पडिबन्धह ।

सूचक, कथयतु सर्वमनुक्रमेण । मैनमन्तरा प्रतिबध्नीतम् ।

**उभौ**— जं आवुत्तो आणवेदि । यदावुत्त आज्ञापयति ।

( इति तूष्णीं तिष्ठतः । )

**स्यालः**—कहेहि कहेहि । कथय कथय ।

**पुरुषः**—अहके जालुग्गालादिहिं मच्छबन्धणोवाएहिं कुडुम्बभलणं कलेमि ।

अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

**स्यालः**—(विहस्य) विसुद्धो दाव आजीवो ।

(विहस्य) विशुद्धस्तावदाजीवः ।

**पुरुषः**—भट्टा, मा एव्वं ।

---

वयमोरिति सूत्रात् । किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः। शोहणे इत्यत्र सा पुंस्येलत इत्येत्वम् । अस्य धीवरस्य अतिनीचपात्रत्वान्मागधी भाषा । श्रृणुतेदानीम् । अहं शक्रावतारतीर्थवासी धीवरः । तीर्थवासीत्यत्र स्थर्थौस्तमिति र्थकारस्य स्तकारः । पाटच्चर किमस्माभिर्जातिः पृष्टा । सूचक, सर्वमनुक्रमेण कथयतु । मैनमन्तरा प्रतिबध्नीतम् । यदावुत्तः भावः आज्ञापयति । कथय । अहं जालोद्गालादिभिः आनायबडिशादिभिः मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि । मच्छेत्यत्र छोनादौ श्च इति लाक्षणिकच्छस्य

**शहये किल जे विणिन्दिए ण हि तक्कम्म विवज्जणिज्जए ।**
**पशुमालणकम्मदालुणे अणुकम्पामिदु एव्व शोत्तिए ॥ १ ॥**

भर्तः मैवम् ।

सहजं किल यद्विनिन्दितं न हि तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥ १ ॥

**स्यालः**—तदो तदो । ततस्ततः ।

**पुरुषः**—अह एक्कश्शिं दिअशे खण्डश़े लोहिअमच्छे मए कप्पिदे । तश्श उदलब्भन्तले इदं लअणभाशुलं अङ्गुलीअअं देक्खिअ पच्छा शे विक्कआअ दंशअन्ते हगे गहिदे भावमिश्शेहिं । मालेह वा मुञ्चेह वा । इअं शे आअदी ।

अथैकस्मिन्दिवसे खण्डशो लोहितमत्स्यो मया कल्पितः । तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादस्य विक्रयाय दर्शयन्नहं गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । इयमस्यागतिः ।

**स्यालः**—जाणुअ, विस्सगन्धी गोहादी मच्छबन्धो एव्व णिस्संसअं । अङ्गुलीअअदंसणं शे विमरिसिदव्वं । राअउलं एव्व गच्छह्मो ।

---

श्वकारः । विशुद्धस्तावदाजीवः । जीविका वृत्तिः । 'सहजं किल यद्विनिन्दितं न हि तत्कर्म विवर्जनीयम् । पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥' शहये इत्यत्र जयद्यां य इति जकारस्य यकारः । कम्मेति सिद्धावस्थायां रूपम् । स्नमदामशिरोनभो नरीति पुँल्लिङ्गता । अथैकस्मिन् दिवसे खण्डशो लोहितमत्स्यो मया कल्पितः । खण्डशः कल्पितः खण्डित इत्यर्थः । तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादस्य विक्रयाय दर्शयन्नहं गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । इयमस्यागतिः । जानुक, विस्रगन्धि लोहितमत्स्योदरास्थितं निःसंशयमङ्गुलीयकमस्य विमर्शितव्यम् । राजकुलमेव

जानुक, विस्रगन्धी गोखादी मत्स्यबन्ध एव निःसंशयम् ।
अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः ।

**रक्षिणौ**—तह । गच्छ अले गन्धिभेदअ ।

तथा । गच्छ अरे ग्रन्थिभेदक ।

(सर्वे परिक्रामन्ति ।)

**स्यालः**—सूअअ, इमं गोपुरदुआरे अप्पमत्ता पडिपालह । जाव इदं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि ।

सूचक, इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिदमङ्गुलीयकं यथागमनं भर्त्रे निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रामामि ।

**उभौ**—पविशदु आवुत्तो शामिपशादाह ।

प्रविशत्वावुत्तः स्वामिप्रसादाय ।

(निष्क्रान्तः स्यालः ।)

**प्रथमः**—जाणुअ, चिलाअदि क्खु आवुत्तो ।

जानुक, चिरायति खल्वावुत्तः ।

**द्वितीयः**—णं अवशलोवशप्पणीआ लाआणो ।

नन्ववसरोपसर्पणीया राजानः ।

**प्रथमः**—जाणुअ, फुल्लन्ति मे हत्था इमश्श वज्झशुमणशं पिणद्धुं ।

---

गच्छामः । गच्छ, अरे ग्रन्थिभेदक, राजमूलावज्ञेत्यर्थः । सूचक, इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं नाम । इदमङ्गुलीयकं यथागमनं भर्त्रे निवेद्य तस्य शासनं प्रतीक्ष्य निष्क्रमामि । प्रविशत्वावुत्तः स्वामिप्रसादाय । शामिप्पशादाहेत्यत्र त्वास्साहोङ्स इति षष्ठ्येकवचनस्य डाहादेशः । ङेसोर्ङ्मिमिति चतुर्थीस्थाने षष्ठी । जानुक, चिरायति खल्वावुत्तः । नन्ववसरोपसर्पणीया राजानः । जानुक,

जानुक, स्फुरतो मम हस्तावस्य वध्यसुमनसं पिनद्धुम् ।

(इति पुरुषं निर्दिशति ।)

**पुरुषः**—ण अलुहदि भावे अकालणमालणं भाविदुं ।

नार्हति भावोऽकारणमारणं भावयितुम् ।

**द्वितीयः**—(विलोक्य) एशे अम्हाणं शामी गह्निअ लाअशाशणं इदोमुहं देक्खदि । तुमं गिद्धबली भविश्शशि ।

(विलोक्य) एष नः स्वामी गृहीत्वा राजशासनं इतोमुखं पश्यति । त्वं गृध्रबलिर्भविष्यासि ।

(प्रविश्य)

**स्यालः**—सूअअ, मुञ्चीअदु एसो जालोवजीवी । उववण्णो किल से अङ्गुलीअअस्स आअमो ।

सूचक, मुच्यतामेष जालोपजीवी । उपपन्नः किलास्याङ्गुलीयकस्यागमः ।

**प्रथमः**—जह आवुत्तो भणादि । यथावुत्तो भणति ।

**द्वितीयः**—एशे जमशदणं पविशिअ पडिणिवुत्तो ।

एष यमसदनं प्रविश्य प्रतिनिवृत्तः । [इति पुरुषं परिमुक्तबन्धनं करोति ।

**पुरुषः**—(स्यालं प्रणम्य) भट्टा, तुह्मकेलए मे जीविदे ।

(स्यालं प्रणम्य) भर्तः, युष्मदीयं मे जीवितम् ।

**स्यालः**—एसो भट्टिणा अङ्गुलीअअमुल्लसम्मिदो अत्थो पदाविदो ।

एष भर्त्राङ्गुलीयकमूल्यसंमितोऽर्थः प्रदापितः ।

(इति पुरुषाय स्वं प्रयच्छति ।)

---

स्फुरतो मे हस्तावस्य वध्यसुमनसः पिनद्धुम् । नार्हति भावोऽकारणमारणे कारणं भवितुम् । अस्माकं स्वामी गृहीत्वा राजशासनमितोमुखं पश्यति । त्वं गृध्रबलिर्भविष्यासि । सूचक एष मुच्यतां जालोपजीवी । उपपन्नः किलास्याङ्गुलीयकस्य आगमः । यथा आवुत्तो भणति । एष यमसदनं प्रविश्य प्रतिनिवृत्तः । भर्तः, युष्मदीयं मे जीवितम् । अस्य भर्त्रा अङ्गुलीयकमूल्यस्य संमितोऽर्थः

**पुरुषः**—(सप्रणामं प्रतिगृह्य) भट्टा, अणुग्गहीदम्हि ।

(सप्रणामं प्रतिगृह्य) भर्तः, अनुगृहीतोऽस्मि ।

**सूचकः**—एशे णाम अणुग्गहीदे जे शूलादो ओदाळिअ हत्थि-क्कन्धे पडिट्ठाविदे ।

एष नामानुगृहीतः यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

**जानुकः**—आवुत्त, पालिदोशिअं एव्व कहेदि—तेण अङ्गुली-अएण भट्टिणो शम्मदेण होदव्वं त्ति ।

आवुत्त, पारितोषिकमेव कथयति—तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यमिति ।

**स्यालः**—ण तस्सिं महारुहं रदणं भट्टिणो बहुमदं त्ति तक्केमि । तस्स दंसणेण को वि अभिमदो जणो भट्टिणा सुमरिदो । मुहुत्तअं पकिदिगम्भीरो वि पज्जस्सुणअणो आसी ।

न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन कोऽप्यभिमतो जनो भर्त्रा स्मृतः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्यश्रु-नयन आसीत् ।

**सूचकः**—संदं णाम आवुत्तेण । श्रान्तं नामावुत्तेन ।

**जानुकः**—णं भणाहि—इमश्श किदे मच्छशत्तुणोत्ति ।

ननु भण—अस्य कृते मत्स्यशत्रोरिति ।

(इति पुरुषमसूयया पश्यति ।)

---

प्रदापितः । भर्तः, अनुगृहीतोऽस्मि । एष नामानुगृहीतः यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः । आवुत्त पारितोषिकमेव कथयति—तेनाङ्गुलीयकेन भर्तुः संमितेन भवितव्यमिति । न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन कोऽप्यनुमतो भर्त्रा जनः स्मृतः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्यश्रु-नयन आसीत् । श्रान्तं नामावुत्तेन । ननु भण, अस्य कृते मत्स्यशत्रोरिति ।

**पुरुषः**—भट्टा, इदो अद्धं तुम्हाणं शुमणोमुल्लं होदु ।

भर्तः, इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ।

**जानुकः**—एदं जुज्जइ । एतद्युज्यते ।

**स्यालः**—धीवर, महत्तरो तुमं पिअवअस्सओ दाणिं मे संवुत्तो । कादम्बरीसक्खिअं अम्हाणं पढमसोहिदं इच्छीअदु । ता सोण्डिआपणं एव्व पविसामो ।

धीवर, महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यताम् । तच्छौण्डिकापणमेव प्रविशामः ।

(इति निष्क्रान्ताः सर्वे ।)

प्रवेशकः ।

(ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः ।)

**सानुमती**—णिव्वट्टिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं जाव साहुजणस्स अभिसेअकालो त्ति । संपदं इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरिस्सं । मेणआसंबन्धेण सरीरभूदा मे सउन्दला । ताए अ दुहिदुणिमित्तं आदिट्ठपुव्वम्हि । (समन्तादवलोक्य) किं णु क्खु उदुच्छवकाले वि

---

भर्तः, इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु । एतद्युज्यते । धीवर, महत्तरः प्रियवयस्यः इदानीमसि मे संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यताम् । कादम्बरी मद्यविशेषः । तस्माच्छौण्डिकापणं प्रविशामः । तथा निष्क्रान्ताः सर्वे । अत्राङ्गुलीयकदर्शनार्थो धीवरप्रसङ्गः प्रसङ्गेन मुख्यतया प्रदर्शित इति प्रकरी नाम चतुर्थ्यर्थप्रकृतिरित्यनुसंधेयम् । यथोक्तं—'कथान्तरप्रसङ्गेन प्रकरी स्यात् प्रवेशभाक्' इति । प्रवेशकः ॥

**ततः प्रविशतीत्यादि** ॥ निर्वर्तितं मया पर्यायनिवर्तनीयमप्सरस्तीर्थसंमज्जनम् । यावत् साधुजनस्याभिषेककाल इति । सांप्रतमस्य राजर्षेर्वृत्तान्तं

णिरुच्छवारम्भं विअ एदं राअउलं दीसइ । अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं । किं दु सहीए आदरो मए माणइदव्वो । होदु । इमाणं दाव उज्जाणपालिआणं तिरक्खरिणीपडिच्छण्णा पस्सवत्तिणी भविअ उवलहिस्सं ।

निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत्साधुजनस्याभिषेककाल इति । सांप्रतमस्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्यामि । मेनकासंबन्धेन शरीरभूता मे शकुन्तला । तया च दुहितृनिमित्तमादिष्टपूर्वास्मि । (समन्तादवलोक्य) किं नु खलु ऋतूत्सवकालेऽपि निरुत्सवारम्भमिव एतद्राजकुलं दृश्यते । अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम् । किं तु सख्या आदरो मानयितव्यः । भवतु । अनयोस्तावदुद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये । [इति नाट्येनावतीर्य स्थिता ।

(ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः ।)

**प्रथमा—**

**चूअं हरिसिअपिअअं जीविदसरिसं वसन्दमासस्स ।**
**सच्चरणचरणभग्गं उदुमङ्गलं विअ पेक्खामि ॥ २ ॥**

चूतं हर्षितपिककं जीवितसदृशं वसन्तमासस्य ।
षट्चरणचरणभग्नं ऋतुमङ्गलमिव पश्यामि ॥

**द्वितीया—**सहि परहुदिए, किं एआइणी मन्तेसि ।

---

प्रत्यक्षीकरिष्यामि । मेनकासंबन्धेन शरीरभूता मे शकुन्तला । तया च दुहितृनिमित्तमादिष्टपूर्वास्मि । किं नु खलु उत्सवकालेऽपि निरुत्सवारम्भमिव एतद्राजकुलं दृश्यते । अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम् । किंतु सख्या आदरो मानयितव्यः । भवत्वनयोस्तावदुद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये । चूतं हर्षितपिककं जीवितसदृशं वसन्तमासस्य । षट्चरणचरणभग्नं ऋतोरङ्गमिव पश्यामि ॥ सखि परभृतिके

सखि परभृतिके, किमेकाकिनी मन्त्रयसे ।

**प्रथमा**—महुअरिए, चूदकलिअं देक्खिअ उम्मत्ता खु परहुदिआ होदि ।

मधुकरिके, चूतकलिकां दृष्ट्वोन्मत्ता खलु परभृतिका भवति ।

**द्वितीया**—(सहर्षं त्वरयोपगम्य) कहं उवट्ठिदो महुमासो ।

(सहर्षं त्वरयोपगम्य) कथमुपस्थितो मधुमासः ।

**प्रथमा**—महुअरिए, तुह दाणिं कालो एसो मदविब्भमगीदाणं ।

मधुकरिके, तवेदानीं काल एष मदविभ्रमगीतानाम् ।

**द्वितीया**—सहि, अवलम्बेहि मं जाव अग्गपादट्ठिआ भविअ कामदेवच्चणस्स चूदंकुरावअअं करेमि ।

सखि, अवलम्बस्व मां यावदग्रपादस्थिता भूत्वा कामदेवार्चनाय चूताङ्कुरावचयं करोमि ।

**प्रथमा**—जइ मम वि क्खु अद्धं अच्चणफलस्स ।

यदि ममापि खल्वर्धमर्चनफलस्य ।

**द्वितीया**—अभणिए वि एदं संपज्जइ । जदो एक्कं एव्व णो जीविदं, दुधा ट्ठिदं सरीरं । (सखीमवलम्ब्य स्थिता चूतांकुरं गृह्णाति ।) अह्महे, अप्पडिबुद्धो वि चूदप्पसवो एत्थ बन्धणभङ्गसुरभी होदि । (कपोतकं कृत्वा)

---

किमेकाकिनी मन्त्रयसे । मधुकरिके चूतकलिकां दृष्ट्वा उन्मत्ता खलु परभृतिका भवति । कथमुपस्थितो मधुमासः । मधुकरिके तवेदानीं काल एष मदविभ्रमोद्गीतानाम् । सखि, अवलम्बस्व माम् । यावदग्रपादस्थिता भूत्वा कामदेवार्चनाय चूतांकुरापचयं करोमि । अफणितमप्येतत्संपद्यते । यत एकमेव नौ जीवितं द्विधा स्थितं शरीरम् । अह्महे इति हर्षे निपातः । अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति । कपोतकं कृत्वा । कपो-

तुं सि मए चूदङ्कुर दिण्णो कामस्स गहिदधणुअस्स ।
पहिअजणजुवइलक्खो पञ्चब्भहिओ सरो होहि ॥ ३ ॥

अभणितेऽप्येतत्संपद्यते । यत एकमेव नौ जीवितं, द्विधा स्थितं शरीरम् । (सखीमवलम्ब्य स्थिता चूतांकुरं गृह्णाति) अहो, अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति । (कपोतकं कृत्वा)

त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतधनुषे ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥ ३ ॥

(इति चूताङ्कुरं क्षिपति ।)

(प्रविश्यापटीक्षेपेण कुपितः)

**कञ्चुकी**—मा तावत् । अनात्मज्ञे, देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे ।

**उभे**—(भीते) पसीदद् अज्जो । अगहीदत्थाओ वअं ।

(भीते) प्रसीदत्वार्यः । अगृहीतार्थे आवाम् ।

**कञ्चुकी**—न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्त्रिभिश्च । तथाहि ।

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया ।

तको नाम संयुक्तहस्तविशेषः । यथोक्तं—'कपोतः प्रान्तसंश्लेषादन्योन्यं सर्पशीर्षयोः' इति । 'त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतधनुषे । पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥' पञ्चानां शराणां मध्ये अभ्यधिकः श्रेष्ठः । प्रकृते 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधो नाद्रियते । न तु पञ्चभ्योऽधिक इति पञ्चमीतत्पुरुषः । तथा सति चूतस्य षष्ठत्वप्रसङ्गात् । चूतं हि पञ्चस्वेव परिगणितम् । तथा चोक्तं त्रिपुरासुरसिन्धौ—'अरविन्दमशोकं च शिरीषं चूतमुत्पलम् । पञ्चैतानि प्रकीर्त्यन्ते पञ्चबाणस्य सायकाः ॥' इति । प्रसीदतु प्रसीदत्वार्यः । अगृहीतार्थे आवाम् । **चूतानामित्यादि** ॥

कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ४ ॥

**सानुमती**—ण एत्थ संदेहो। महप्पहावो खु राएसी।

नात्र संदेहः। महाप्रभावः खलु राजर्षिः।

**प्रथमा**—अज्ज, कदि दिअहाइं अम्हाणं मित्तावसुणा रट्ठिएण भट्टिणो पाअमूलादो पेसिदाणं। इदं अ णो पमदवणस्स सअळं पडिकम्म अप्पिदं। ता अस्सुदपुव्वो अम्हेहिं एसो वुत्तन्तो।

आर्य, कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भर्तुः पादमूलात् प्रेषितयोः। इदं च नौ प्रमदवनस्य सकलं प्रतिकर्म अर्पितम्। तस्माद-श्रुतपूर्व आवाभ्यामेष वृत्तान्तः।

**कञ्चुकी**—भवतु। न पुनरेवं प्रवर्तितव्यम्।

**उभे**—अज्ज कोदूहलं णो होइ। जइ इमिणा जणेण सोदव्वं कहेदु अज्जो किंणिमित्तं भट्टिणा वसन्तुस्सवो पडिसिद्धो।

---

चिरनिर्गतापि कलिका कोरकः स्वं रजः परागं न बध्नाति नोद्वहति। अत्र निर्गतापीत्यनेन अस्याश्चिराद्विकासो नास्तीत्यभिप्रायः। यत् कुरबकं संनद्धमपि विकासोन्मुखमपि तत्कोरकं कोरकावस्थया स्थितम्। शिशिरे गते शिशिरर्तौ विरतेऽपि पुंस्कोकिलानां कण्ठे स्खलितं गद्गदितं पञ्चमस्वरशून्यं, न निर्गतमित्यर्थः। तरुभिः तदाश्रयिभिश्च राजशासनमङ्गीकृतमित्यर्थं प्रतिपाद्य इदानीं मदनेनापि राजाज्ञाऽङ्गीक्रियत इत्युत्प्रेक्ष्यते। स्मरोऽपि चकितः त्रस्तः तूणादर्धकृष्टं यथा तथा कृष्टमुद्धृतं तूणार्धकृष्टं तं शरं संहरति प्रतिनिक्षिपतीति शङ्के मन्ये ऊहामि। सर्वेषां मदनविकारः प्रतिबद्ध इत्यर्थः। नात्र संदेहः। महाप्रभावः खलु राजर्षिः। आर्य कति दिवसानि गतानि आवयोर्मित्रावसुना राष्ट्रियेण प्रेषितयोर्भर्तुः पादमूलादत्र चरन्त्योः। इदं च नाम प्रमदवनस्य सकलं प्रतिकर्मार्पितम्। तस्मादश्रुतपूर्व आवाभ्यामेष वृत्तान्तः। अद्य कुतूहलं नौ

अद्य कौतूहलं नौ भवति । यद्यनेन जनेन श्रोतव्यं कथयत्वार्यः किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः ।

**सानुमती**—उस्सवप्पिआ खु माणुसा । गुरुणा कारणेण होदव्वं ।

उत्सवप्रियाः खलु मानुषाः । गुरुणा कारणेन भवितव्यम् ।

**कञ्चुकी**—बहुलीभूतमेतत्किं न कथ्यते । किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनम् ।

**उभे**—सुदं रट्ठिअमुहादो जाव अङ्गुलीअअदंसणं ।

श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम् ।

**कञ्चुकी**—तेन ह्यल्पं कथयितव्यम् । यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मया तत्रभवती रहसि शकुन्तला मोहात्प्रत्यादिष्टेति, तदाप्रभृत्येव पश्चात्तापमुपगतो देवः । तथाहि ।

**रम्यं द्वेष्टि यथापुरं प्रकृतिभिर्न प्रत्यहं सेव्यते**
**शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।**

---

भवति । यद्यनेन जनेन श्रोतव्यं कथयत्वार्यः । किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः । उत्सवप्रियाः खलु मानुषाः । गुरुणा कारणेन भवितव्यम् । शकुन्तलाप्रत्यादेशकौलीनं शकुन्तलायाः प्रत्यादेशेन निराकरणेन हेतुना कौलीनं लोकवादः । 'स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्' इत्यमरः । श्रुतं राष्ट्रियमुखात् यावदङ्गुलीयकदर्शनम् । **रम्यं द्वेष्टीत्यादि** ॥ रम्यं मनोहरं चन्दनवनितादि द्वेष्टि न सहते । यथापुरं पूर्वं यथा प्रकृतिभिः प्रत्यहमहरहः । 'अव्ययं विभक्ति' इत्यादिना प्रतिशब्देन वीप्सायामव्ययीभावः । 'नपुंसकादन्यतरस्याम्' इत्यन्नन्तादच्प्रत्ययः । उन्निद्र एव उत्क्रान्ता निद्रा यस्मात्स तथोक्तः । 'प्रादिभ्यो धातुजस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च' इति समासः । शय्यायाः शयनीयस्य उपान्ते इतस्ततः

दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ ५ ॥

सानुमती—पिअं मे ।        प्रियं मे ।

कञ्चुकी—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः ।

उभे—जुज्जइ ।        युज्यते ।

(नेपथ्ये)

एदु एदु भवं ।        एत्वेतु भवान् ।

कञ्चुकी—(कर्णं दत्त्वा) अये, इत एवाभिवर्तते देवः । स्वकर्मानुष्ठीयताम् ।

उभे—तह ।        तथा ।        [इति निष्क्रान्ते ।

(ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च)

कञ्चुकी—(राजानमवलोक्य) अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् । एवमुत्सुकोऽपि प्रियदर्शनो देवः । तथाहि ।

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।

---

विवर्तनैः लुठनैः क्षपाः रात्रीः विगमयति यापयति । अन्तःपुरेभ्यः अन्तःपुरकान्ताभ्यः यदा यस्मिन् काले दाक्षिण्येन दक्षिणनायकत्वेन उचितामर्हां कालोपयोग्यां वाचं ददाति । तस्मिन्काले गोत्रेषु नामधेयेषु । 'गोत्रं नाम्न्यचले कुले' इत्यमरः । स्खलितः विपर्यस्तः । अथवा शकुन्तलानाम गृह्णातीत्यर्थः । चिरं व्रीडया लज्जया विलक्षः विगतलक्षः इतिकर्तव्यताशून्य इत्यर्थः । भवति च । चकारः क्रियासमुच्चयार्थः । प्रियं मे प्रियं मे । प्रभवतः प्रभोः । युज्यते । एतु भवान् । **ततः प्रविशतीति** ॥ प्रत्यादिष्टः निरस्तः विशेषमण्डनस्य

चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ६ ॥

**सानुमती**—(राजानं दृष्ट्वा) ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स किदे सउन्दला किलम्मदि ।

(राजानं दृष्ट्वा) स्थाने खलु प्रत्यादेशविमानिताप्यस्य कृते शकुन्तला क्लाम्यति ।

**राजा**—(ध्यानमन्दं परिक्रम्य)

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥

**सानुमती**—णं ईरिसाइं तवस्सिणीभाअहेआइं ।

नन्वीदृशानि तपस्विनीभागधेयानि ।

**विदूषकः**—(अपवार्य) लङ्घिदो एसो भूओ वि सउन्दलावाहिणा । ण जाणे कहं चिकिच्छिदव्वो भविस्सदि त्ति ।

---

विशिष्टालंकारस्य विधिः करणं येन स तथोक्तः । वामे सव्ये प्रकोष्ठे कूर्परमणिबन्धमध्यमभागे अर्पितं न्यस्तम् । काञ्चनं सौवर्णम् एकमेव वलयं कटकं बिभ्रत् दधत् । पुरुषस्यैककटकधारणे दक्षिणहस्तेनैव कर्तव्ये अत्र वामहस्ते धारणं वियोगवैचित्र्यादिति मन्तव्यम् । आत्मनः तेजोगुणात् तेजसः गुणः उत्कर्षः तस्मात् । संस्कारोल्लिखितः संस्कारादिशुद्धयोल्लिखितः शाणोद्धृष्टो महामणिरिव मणिश्रेष्ठ इव क्षीणोऽपि कृशोऽपि नो लक्ष्यते नालोक्यते । क्षीणः सन्नपि क्षीण इव न प्रतीयत इत्यर्थः । अयं प्रयोगः पूर्वमप्युक्तः—अपचितमपि गात्रं व्यायतत्वादलक्ष्यमिति । स्थाने खलु प्रत्यादेशविमानितापि अस्य कृते शकुन्तला क्लाम्यति । **प्रथमं सारङ्गेत्यादि** ॥ अनुशयदुःखाय पश्चात्तापदुःखाय । नन्वीदृशानि तपस्विनीभागधेयानि । ईदृशानि राज्ञो विरहकातरवचनानि । लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सि-

(अपवार्य) लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति ।

**कञ्चुकी**—(उपगम्य) जयतु जयतु देवः । महाराज, प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।

**राजा**—वेत्रवति, मद्वचनादमात्यमार्यपिशुनं ब्रूहि । चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति ।

**प्रतीहारी**—जं देवो आणवेदि । यद्देव आज्ञापयति ।

[इति निष्क्रान्ता ।

**राजा**—वातायन, त्वमपि नियोगमशून्यं कुरु ।

**कञ्चुकी**—यदाज्ञापयति देवः । [इति निष्क्रान्तः ।

**विदूषकः**—किदं भवदा णिम्मक्खिअं । संपदं सिसिरे तावच्छेदरमणिज्जे इमस्सिं पमदवणुद्देसे सुहं अत्ताणं रमइस्ससि ।

कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरे तापच्छेदरमणीयेऽस्मिन्प्रमदवनोद्देशे सुखमात्मानं रमयिष्यसि ।

**राजा**—वयस्य, रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्यभिचारि वचः । कुतः ।

---

तव्यो भविष्यतीति । यद्देव आज्ञापयति । वातायन इति तस्य कञ्चुकिनो नाम । कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरे तापच्छेदिनि सप्तपर्णच्छायरमणीयेऽस्मिन् प्रमदवनोद्देशे सुखमात्मानं रमयिष्यसि । रन्ध्रे छिद्रे स्वास्थ्याभावे सति उपनिपतन्ति समापतन्तीति तथोक्ताः । अनर्थाः आपद इति यदुच्यते । लोकेनेति शेषः । तद्वचः अव्यभिचारि अविपर्यासि । नान्यथा भवतीत्यर्थः ।

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ ८ ॥

**विदूषकः**—चिट्ठ दाव । इमिणा दण्डकट्ठेण कन्दप्पवाहिं णासेमि ।

तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पव्याधं नाशयामि ।

(इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति ।)

**राजा**—(सस्मितं) भवतु । दृष्टं ब्रह्मवर्चसम् । सखे, कोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ।

**विदूषकः**—णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा। माहवीमण्डवे इमं वेलं अदिवाहइस्सं । तहिं मे चित्तफलए सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिदिं आणेहि त्ति ।

नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा—माधवीमण्डपे इमां वेलामतिवाहयिष्यामि । तत्र मे चित्रफलके स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

**राजा**—ईदृशं हृदयविनोदनस्थानम् । तत्तमेव मार्गमादेशय ।

**विदूषकः**—इदो इदो भवं । इत इतो भवान् ।

---

कुत इति प्रश्ने । तदेवोपपादयति—**मुनिसुतेत्यादिना** ॥ स्पष्टोऽर्थः । तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पव्याधं मन्मथकिरातं नाशयामि । दृष्टं ब्रह्मवर्चसम् । नन्वासन्नपरिचारिका चतुरिका भवतादिष्टा—माधवी-मण्टपे इमां वेलामतिवाहयिष्यामि । तत्र मे चित्रफलके स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति । इत इतो भवान् ॥

(उभौ परिक्रामतः । सानुमत्यनुगच्छति ।)

**विदूषकः**—एसो मणिसिलापट्टअसणाहो माहवीमण्डवो उवआररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि । ता पविसिअ णिसीददु भवं ।

एष मणिशिलापट्टकसनाथो माधवीमण्डप उपचाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति । तत्प्रविश्य निषीदतु भवान् ।

(उभौ प्रवेशं रूपयित्वोपविष्टौ ।)

**सानुमती**—लदादंसिदा देक्खिस्सं दाव सहीए पडिकिदिं । तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं ।

लतादर्शिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्यै भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि । [इति तथा कृत्वा स्थिता ।

**राजा**—सखे, सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपगतो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् ।

**विदूषकः**—ण विसुमरामि । किंतु सव्वं कहिअ अवसाणे तुए परिहासविअप्पो एसो ण भूदत्थो त्ति आचक्खिदं । मए वि मिप्पिण्डबुद्धिणा तह एव्व गहीदं । अहवा भविदव्वदा बलवदी ।

---

एष मणिशिलापट्टसनाथो माधवीमण्डप उपचाररमणीयतया निःसंशयं स्वागतेनैव नौ प्रतीच्छति । तस्मात्प्रविश्य निषीदतु भवान् । लतासंगोपिता द्रक्ष्यामि तावत् सख्याः प्रतिकृतिम् । तस्यै भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि । न बिस्मरामि । किंतु सर्वं कथयित्वा अवसाने त्वया परि-

न विस्मरामि । किंतु सर्वं कथयित्वावसाने त्वया परिहासविजल्प एष न भूतार्थ इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता बलवती ।

**सानुमती**—एव्वं एदं । एवमेतत् ।

**राजा**—(ध्यात्वा) सखे, त्रायस्व माम् ।

**विदूषकः**—भो, किं एदं । अणुववण्णं क्खु ईरिसं तुइ । कदा वि सप्पुरिसा सोअपत्तत्ताणो ण होन्ति । णं पवादे वि णिक्कम्पा गिरीओ ।

भोः किमेतत् । अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषाः शोकपात्रात्मानो न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः ।

**राजा**—वयस्य, निराकरणविक्लबायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि—

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९ ॥

**सानुमती**—अम्महे, ईरिसी सकज्जपरदा । इमस्स संदावेण अहं रमामि ।

अहो, ईदृशी स्वकार्यपरता । अस्य संतापेनाहं रमे ।

---

हासविजल्पित एषः न भूतार्थ इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता बलवती । एवमेतत् । किमेतत् । अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषाः शोकपात्रात्मानो न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः । **इतः प्रत्यादेशादित्यादि** ॥ स्पष्टोऽर्थः । अत्र दृष्टान्तेनात्मनः प्रत्याख्यानादपवादो नाम विमर्शसंधेः प्रथमाङ्गमुक्तं भवति ।

**विदूषकः**—अत्थि मे तक्को—केण वि तत्तहोदी आआसचारिणा अवणीदे त्ति ।

अस्ति मे तर्कः—केनापि तत्रभवत्याकाशचारिणाऽपनीतेति ।

**राजा**—कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

**सानुमती**—संमोहो क्खु विम्हअणिज्जो, ण पडिबोहो ।

संमोहः खलु विस्मयनीयः, न प्रतिबोधः ।

**विदूषकः**—जइ एव्वं अत्थि समाअमो कालेण तत्तहोदीए ।

यद्येवमस्ति खलु समागमः कालेन तत्रभवत्या ।

**राजा**—कथमिव ।

**विदूषकः**—ण क्खु मादापिदरा भत्तुविओअदुक्खिअं दुहिदरं देक्खिदुं पारेन्ति ।

न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

---

यथोक्तं—'अपवादस्तु दोषाणामुद्घाटनमुदीर्यते' इति । अहो ईदृशी स्वकार्यपरता । अस्य संतापेनाहं रमे । अस्ति मे तर्कः । केनापि तत्रभवती आकाशचारिणाऽपनीतेति । संमोहः खलु विस्मयनीयः, न प्रतिबोधः । यद्येवम्, अस्ति समागमोपायः कालेन भवतस्तत्रभवत्याः । न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः । अत्र शकुन्तलाप्राप्तेरवश्यंभावित्वेन गम्यमानत्वान्नियताप्तिर्नाम चतुर्थावस्थेति मन्तव्यम् । यथोक्तं—'अर्थस्याभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता' इति । अत्र च प्रकरीनियताप्त्योः समन्वयाद्विमर्शसंधिरिति मन्तव्यम् । यथोक्तं—'यत्रावमृश्यते मोहाद्व्यसनाद्वा विलोभनात् । गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः ॥' अस्याङ्गानि—'अपवादश्च संफेटो विद्रवद्रवशक्तयः । द्युतिः प्रसङ्गश्छलनं व्यवसायो निरोधनम् ॥ प्ररोचनं

**राजा**—वयस्य,

> **स्वप्नो नु माया नु मतिभ्रमो नु**
> **क्लिष्टं नु तावत्फलमेव पुण्यम् ।**
> **असंनिवृत्त्यै तदतीतमेते**
> **मनोरथानामतटाः प्रपाताः ॥ १० ॥**

**विदूषकः**—मा एव्वं । णं अङ्गुलीअअं एव्व णिदंसणं अवस्सं-भाविणो अचिन्तणिज्जो समाअमो होदि त्ति ।

मैवम् । नन्वङ्गुलीयकमेव निदर्शनमवश्यंभाविनोऽचिन्तनीयः समागमो भवतीति ।

**राजा**—(अङ्गुलीयकं विलोक्य) अये, इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

> **तव सुचरितमङ्गुलीय नूनं**
> **प्रतनु ममेव विभाव्यते फलेन ।**
> **अरुणनखमनोहरासु तस्या-**
> **श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११ ॥**

**सानुमती**—जइ अण्णहत्थगदं भवे सच्चं एव्व सोअणिज्जं भवे ।

---

विचलनमाधानं च त्रयोदश ।' इति । **स्वप्नो न्वित्यादि** ॥ तदित्यनेन पञ्चमाङ्कप्रतिपादितं शकुन्तलादर्शनं परामृश्यते । तद्दर्शनं स्वप्नो नु, सुप्तिज्ञानं किमु । माया नु, असत्कल्पना किमु । मतिभ्रमो नु, मिथ्याध्यवसायः किमु । पुण्यं स्वकीयं तावत्फलमेव सुकृतं दर्शनमात्रफलमेव । क्लिष्टं नु, नष्टं किमु । तत् असंनिवृत्त्यै अपुनरावृत्त्यै अतीतमेव अतिक्रान्तमेव । मनोरथानां प्रवाहाः स्रोतांसि । अतटाः तटरहिताः, निरर्गला भवन्तीत्यर्थः । मैवम् । नन्वङ्गुलीयकदर्शनमेव निदर्शनमवश्यंभाविनोऽर्थस्य—अचिन्तनीयः समागमो भवतीति । **तव सुचरि-**

यद्यन्यहस्तगतं भवेत्सत्यमेव शोचनीयं भवेत् ।

**विदूषकः**—भो, इअं णाममुद्दा केण उग्घादेण तत्तहोदीए हत्थसंसग्गं पाविदा ।

भोः, इयं नाममुद्रा केनोद्धातेन तत्रभवत्या हस्तसंसर्गं प्रापिता ।

**सानुमती**—मम वि कोदूहलेण आआरिदो एसो ।

ममापि कौतूहलेनाकारित एषः ।

**राजा**—श्रूयताम् । स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह—कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति ।

**विदूषकः**—तदो तदो । ततस्ततः ।

**राजा**—पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता—

**एकैकमत्र दिवसे दिवसे मदीयं**
**नामाक्षरं गणय गच्छति यावदन्तम् ।**
**तावत्प्रिये मदवरोधगृहप्रवेशं**
**नेता जनस्तव समीपमुपैष्यतीति ॥ १२ ॥**

तच्च दारुणेन मया मोहान्नानुष्ठितम् ।

**सानुमती**—रमणीओ क्खु अवही विहिणा विसंवादिदो ।

रमणीयः खल्ववधिर्विधिना विसंवादितः ।

**विदूषकः**—कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भन्तले आसि ।

---

**तमित्यादि** ॥ स्पष्टोऽर्थः । यद्यन्यहस्तगतं भवेत्तत्सत्यमेव शोचनीयं भवेत् । भो इयं नाममुद्रा केनोद्धातेन उद्योगेन तत्रभवत्याः हस्तसंसर्गं प्रापिता । ममापि कौतूहलेनाकारित एषः । आकारितः आहूतः प्रेरित इत्यर्थः । ततस्ततः । **एकैकमित्यादि** ॥ स्पष्टोऽर्थः । रमणीयः खल्ववधिर्विधिना

कथं धीवरकल्पितस्य लोहितमत्स्यस्योदराभ्यन्तरे आसीत् ।

**राजा**—शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ।

**विदूषकः**—जुज्जइ । युज्यते ।

**सानुमती**—अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेहो । अहवा ईरिसो अणुराओ अहिण्णाणं अवेक्खदि । कहं विअ एदं ।

अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेहः । अथवेदृशोऽनुरागोऽभिज्ञानमपेक्षते? कथमिवैतत्?

**राजा**—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

**विदूषकः**—(आत्मगतं) गहीदो णेण पन्था उम्मत्तआणम् ।

(आत्मगतं) गृहीतोऽनेन पन्था उन्मत्तानाम् ।

**राजा**—(अङ्गुलीयकं विलोक्य)

**कथं नु तं बन्धुरकोमलाङ्गुलिं**
**करं विहायासि निमग्नमम्भसि ।**

अथवा ।

**अचेतनं नाम गुणं न लक्षये-**
**न्मयैव कस्मादवधीरिता प्रिया ॥ १३ ॥**

**विदूषकः**—(आत्मगतं) आम, अहं खु बुभुक्खाए खादिदव्वो म्हि ।

---

विसंवादितः । अथ कथं धीवरखण्डितस्य लोहितमत्स्यस्योदराभ्यन्तरे आसीत् । युज्यते । तपस्विकन्यायां शकुन्तलायामधर्मभीरोरस्य राजर्षेः परिणये संदेहः । कुत ईदृशोऽनुरागोऽभिज्ञानमपेक्षते । कथमिवैतत् । गृहीतोऽनेन पन्था उन्मत्तानाम् । **कथं नु तमित्यादि** ॥ स्पष्टोऽर्थः । आम इति पीडायां

(आत्मगतं) आम, अहं खलु बुभुक्षया खादितव्योऽस्मि ।

**राजा**—अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

(प्रविश्यापटीक्षेपेण चित्रफलकहस्ता)

**चतुरिका**—इअं चित्तगदा भट्टिणी ।

इयं चित्रगता भट्टिनी ।

(इति चित्रफलकं दर्शयति ।)

**विदूषकः**—साहु वअस्स साहु, महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो । क्खलदि विअ मे दिट्ठी णिम्मुण्णअप्पदेसेसु ।

साधु वयस्य साधु, मधुरावस्थानदर्शनीयो भावानुप्रवेशः स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ।

**सानुमती**—अम्मो राएसिणो वत्तिआणिउणदा । जाणे सही मे अग्गदो वट्टइत्ति ।

अहो राजर्षेर्वर्तिकानिपुणता । जाने सखी मेऽग्रतो वर्तत इति ।

**राजा**—

**यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।**
**तथापि तस्या लावण्यं रेखया किंचिदन्वितम् ॥ १४ ॥**

---

निपातः । अहं खलु बुभुक्षया खादितव्योऽस्मि । इयं चित्रगता भट्टिनी । साधु वयस्य साधु । मधुरावस्थानदर्शनीयो भावानुप्रवेशः । स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु । अहो राजर्षेर्वर्तिकानिपुणता । जाने सखी मे अग्रतो वर्तत इति । **यद्यदिति** ॥ चित्रे आलेख्ये यद्यदङ्गसौष्ठवं तत्तदन्यथा अन्यप्रकारेण क्रियते । आवापोद्वापाभ्यां साम्यं क्रियत इत्यर्थः । तथापि चित्रे आवापोद्वापाभ्यामङ्गसौष्ठवस्य अन्यथाकर्तुं शक्यत्वेऽपि तस्याः शकुन्तलाया लावण्यं कान्तिविशेषः लेखया लेखनेन किंचिदन्वितमीषत्संगतम् । सदृशमेतत्

**सानुमती**—सरिसं एदं पच्चादावगुरुणो सिणेहस्स अणवले-वस्स अ ।

सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च ।

**विदूषकः**—भो, दाणिं तिण्हिआ तत्तहोदीओ दीसन्ति । सव्वाओ दंसणीआओ । कदमा तत्तहोदी सउन्दला ।

भोः, इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वा दर्शनीयाः । कतमा तत्रभवती शकुन्तला ।

**सानुमती**—अणभिण्णो क्खु रूवस्स मोहदिट्ठी अअं जणो ।

अनभिज्ञः खलु रूपस्य मोघदृष्टिरयं जनः ।

**राजा**—त्वं तावत्कतमां तर्कयसि ।

**विदूषकः**—तक्केमि—जा एसा सिढिलकेसबन्धणुव्वन्तकुसुमेण केसन्तेण उब्भिण्णसेअबिन्दुणा वअणेण विसेसदो ओसरिआहिं बाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पस्से इसिपरिस्सन्ता विअ आलिहिदा एसा तत्तहोदी सउन्दला, इदराओ सहीओ त्ति ।

तर्कयामि—यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता एषा तत्रभवती शकुन्तला । इतरे सख्याविति ।

---

पश्चात्तापगुरोः स्नेहस्य अनवलेपस्य च । भो इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वा दर्शनीयाः । कतमा तत्रभवती शकुन्तला । अनभिज्ञः खलु सखीरूपस्य मोघदृष्टिरयं जनः । तर्कयामि यैषा शिथिलकेशोद्वृत्तकुसुमेन केशान्तेन उद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामुपलक्षिता अवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेव आलिखिता एषा तत्रभवती

राजा—निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् । कुतः ।

**स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः**
**अश्रु च कपोलपतितं लक्ष्यमिदं वर्णिकोच्छ्वासात् ॥ १५ ॥**

चतुरिके, अर्धलिखितमेतद्विनोदस्थानम् । गच्छ । वर्तिकां तावदानय ।

चतुरिका—अज्ज माढव्व, ओलम्ब चित्तफलअं । जाव आअच्छामि ।

आर्य माढव्य, अवलम्बस्व चित्रफलकम् । यावदागच्छामि ।

राजा—अहमेवैतदवलम्बे । (इति यथोक्तं करोति ।)

[निष्क्रान्ता चेटी ।

राजा—अहं हि—

**साक्षात्प्रियामुपगतामपहाय पूर्वं**
**चित्रार्पितां पुनरिमां बहु मन्यमानः ।**
**स्रोतोवहां पथि निकामजलामतीत्य**
**जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १६ ॥**

विदूषकः—(आत्मगतं) एसो अत्तभवं णदिं अदिक्कमिअ मिअ-

---

शकुन्तला । इतरे सख्याविति । भावचिह्नं भावेन सात्त्विकभावेन कृतं चिह्नं लक्ष्म । कुत इति प्रश्ने । तदेव दर्शयति—**स्विन्नाङ्गुलीति** ॥ रेखाप्रान्तेषु रेखापर्यन्तेषु मलिनः मलीमसः स्विन्नानामङ्गुलीनां निवेशः स्पर्शस्थानं दृश्यते । 'करणाधिकरणयोश्च' इति घञ् । कपोलपतितमश्रु नेत्रोदकम् । वर्णिकोच्छ्वासात् वर्णिकाया हरितालादेः उच्छ्वासः उच्छूनता तस्मात् । इदं लक्ष्यम् एतद्विभाव्यम् । पुरतो दृश्यत इत्यर्थः । आर्य माण्डव्य अवलम्बस्व चित्रफलकम् । यावदागच्छामि । **साक्षादिति** ॥ स्पष्टः । एषोऽत्र

तिण्हिअं संकन्तो। (प्रकाशं) भो वअस्स, अवरं किं एत्थ लिहिदव्वं।

(आत्मगतं) एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः। (प्रकाशं) भो वयस्य, अपरं किमत्र लिखितव्यम्।

**सानुमती**—असंसअं जो जो पदेसो सहीए मे अहिरुइदो तं तं आलिहिदुकामो भवे।

असंशयं यो यः प्रदेशः सख्या मेऽभिरुचितस्तं तमालिखितुकामो भवेत्।

**राजा**—श्रूयताम्।

**कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी**
**पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।**
**शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः**
**शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्॥ १७॥**

**विदूषकः**—(आत्मगतं) जह अहं देक्खामि पूरिदव्वं णेण चित्त-फलअं लम्बकुच्चाणं तावसाणं कदम्बेहिं।

(आत्मगतं) यथाहं पश्यामि पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः।

---

भवान् नदीमतिक्रम्य सत्यं मृगतृष्णिकां संक्रान्तः। भो वयस्य अपरं किमत्र लिखितव्यम्। असंशयं यो यः प्रदेशः अभिरुचितः तं तमालिखितुकामो भवेत्। **कार्या सैकतेति**॥ गौरीगुरोः हिमाद्रेः पादाः पर्यन्तपर्वताः। कृष्णमृगस्य कृष्णसारस्य शृङ्गे, वामनयनं स्वकीयं सव्यनेत्रं, कण्डूयमानां मृगीं निर्मातुं लिखितुं, इच्छामि वाञ्छामि। अत्र स्त्रीजातेर्वामभागस्य मन्मथकथा-धिष्ठानत्वात् वामनयनमित्युक्तम्। चित्रे कण्डूयां कर्तुमशक्यत्वात् इच्छामी-त्युक्तम्। अयि, नूनमनेन पूरितव्यं चित्रफलकं लम्बकूर्चानां तापसानां

राजा—वयस्य, अन्यच्च शकुन्तलायाः प्रसाधनमभिमतमत्र विस्मृतमस्माभिः ।

विदूषकः—किं विअ । किमिव ।

सानुमती—वणवासस्स सोउमारस्स अ जं सरिसं भविस्सदि ।
वनवासस्य सौकुमार्यस्य च यत्सदृशं भविष्यति ।

राजा—

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १८ ॥

विदूषकः—भो, किं णु खु तत्तहोदी रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं आवरिअ चइदचइदा विअ ठिआ । (सावधानं निरूप्य) आ, एसो दासीए पुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं अदिलङ्घेदि महुअरो ।

भोः, किं नु खलु तत्रभवती रक्तकुवलयपल्लवशोभिनाग्रहस्तेन मुखमावृत्य चकितचकितेव स्थिता । (सावधानं निरूप्य) आः, एष दास्याः पुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमतिलङ्घते मधुकरः ।

राजा—ननु वार्यतामेष दुष्टः ।

---

सार्थेन । किमिव । वनवासस्य च सौकुमार्यस्य च यत्सदृशं तद्भविष्यति । **कृतं न कर्णेति** ॥ कर्णे अर्पितं न्यस्तं बन्धनं वृन्तं यस्य तत्तथोक्तम् । वाशब्दः समुच्चये । भो किं नु खलु तत्रभवती रक्ताशोकदलशोभिना अग्रहस्तेन मुखमावृत्य चकितचकितेव स्थिता । आः इति कोपे निपातः । एष दास्याः पुत्रः कुसुमपाटच्चरः तत्रभवत्या वदनमतिलङ्घते दुष्टमधुकरः ।

विदूषकः—भवं एव्व अविणीदाणुसासी इमस्स वारणे पहविस्सदि ।

भवानेवाविनीतानुशासी अस्य वारणे प्रभविष्यति ।

राजा—युज्यते । अयि भोः कुसुमलताप्रियातिथे, किमत्र परिपतनखेदमनुभवसि ।

**एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।**
**प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥**

सानुमती—अज्ज क्खु अभिजादं वारिदो एसो ।

अद्य खल्वभिजातं वारित एषः ।

विदूषकः—पडिसिद्धा वि वामा खु एसा जादी ।

प्रतिषिद्धापि वामा खल्वेषा जातिः ।

राजा—एवं भोः न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

**अक्लिष्टबालतरुपल्लवलोभनीयं**
**पीतं मया सदयमेव रतोत्सवेषु ।**
**बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-**
**स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २० ॥**

विदूषकः—एव्वं तिक्खदण्डस्स किं ण भाइस्सदि । (प्रहस्य, आत्मगतं) एसो दाणिं उम्मत्तो । अहं पि एदस्स संसग्गेण ईरिसो ह्मि संवुत्तो । (प्रकाशं) भो, चित्तं क्खु एदं ।

---

भवानेवाविनीतानुशासी अस्य वारणे प्रभविष्यति । **एषा कुसुमेति** ॥ स्पष्टः । अद्य खल्वभिजातं वारित एषः । प्रतिषिद्धापि वामा खल्वेषा जातिः । **अक्लिष्टेत्यादि** ॥ स्पष्टः । एवं भो इत्यादि कमलोदरबन्धनस्थमित्यन्तेन वाक्येन तर्जनस्य गम्यमानत्वात् द्युतिर्नाम संध्यङ्ग-

एवं तीक्ष्णदण्डस्य किं न भेष्यति । (प्रहस्य, आत्मगतं) एष इदानीमुन्मत्तः । अहमप्येतस्य संसर्गेणेदृशोऽस्मि संवृत्तः । (प्रकाशं) भोः, चित्रं खल्वेतत् ।

**राजा**—कथं चित्रम् ।

**सानुमती**—अहं पि दाणिं दाव अणवगदत्था, किं उण जहालिहिदाणुभावी एसो ।

अहमपीदानीं तावदनवगतार्था, किं पुनर्यथालिखितानुभाव्येषः ।

**राजा**—वयस्य, किमिदमनुष्ठितं पौरोभाग्यम् ।

**दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।**
**स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २१ ॥**

(इति बाष्पं विहरति ।)

**सानुमती**—पुव्वावरविरोही अपुव्वो एसो विहाणमग्गो ।

पूर्वापरविरोध्यपूर्व एष विधानमार्गः ।

**राजा**—वयस्य, कथमेवमविश्रान्तदुःखमनुभवामि ।

**प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।**
**बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥**

---

मुक्तम् । यथोक्तं—तर्जनोद्वेजने द्युतिरिति । एवं तीक्ष्णदण्डस्य न भेष्यति । अत्र काकुरनुसंधेया । तिक्खदण्डस्स ण बिभेइस्सदीत्यत्र प्राकृते क्वचित् असादेरिति पञ्चमीस्थाने षष्ठी । एष इदानीमुन्मत्तः । अहमप्येतत्संसर्गेण ईदृशोऽस्मि संवृत्तः । चित्रं खल्वेतत् । अहमपीदानीं तावदनवगतार्था । किं पुनर्यथालिखितानुभाव्येषः । यथालिखितं शकुन्तलामनुसृत्यानुभवति ध्यायतीति यथालिखितानुभावी । पौरोभाग्यं, पुरोभागी दोषैकदर्शी दुष्ट इत्यर्थः, तस्य कर्म । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् । 'नस्तद्धिते' इति टिलोपः । **दर्शनेति** ॥ स्पष्टः । पूर्वापरविरोधी अपूर्व एष विधानमार्गः । **प्रजागरादिति** ॥

**सानुमती**—सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए ।

सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।

(प्रविश्य)

**चतुरिका**—जेदु जेदु भट्टा । वण्णिआकरण्डअं गेण्हिअ इदोमुहं पत्थिदम्हि ।

जयतु जयतु भर्ता । वर्णिकाकरण्डं गृहीत्वेतोमुखं प्रस्थितास्मि ।

**राजा**—किं च ।

**चतुरिका**—सो मे हत्थादो अन्तरा तरलिआदुदीआए देवीए वसुमदीए—अहं एव्व एदं अज्जउत्तस्स उवणइस्सं त्ति सबळक्कारं गहीदो ।

स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्या—अहमेवैनमार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः ।

**विदूषकः**—दिट्ठिआ तुमं मुक्का । दिष्ट्या त्वं मुक्ता ।

**चतुरिका**—जाव विडवलग्गं उत्तरीअं देवीए तरलिआ मोचेदि दाव मए णिव्वाहिदो अत्ता ।

यावद्विटपलग्नमुत्तरीयं देव्यास्तरलिका मोचयति तावन्मया निर्वाहित आत्मा ।

**राजा**—वयस्य, उपस्थिता देवी बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ।

---

स्पष्टः । सर्वथा मार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः । वर्णिकाकरण्डं गृहीत्वा इतोमुखं प्रस्थितास्मि । स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्या अहमेवैनमार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः । दिष्ट्या त्वं मुक्ता । यावद्विटपलग्नमुत्तरीयकं देव्यास्तरलिका मोचयति तावन्मयाऽऽनीत

**विदूषकः**—अत्ताणं त्ति भणाहि । (चित्रफलकमादायोत्थाय च) जइ भवं अन्तेउरकळहादो मुञ्चीअदि तदो मं मेहप्पडिच्छन्दे पासादे सद्दावेहि ।

आत्मानमिति भण । (चित्रफलकमादायोत्थाय च) यदि भवानन्तःपुरकलहान्मुच्यते ततो मां मेघप्रतिच्छन्दे प्रासादे शब्दापय ।

[इति द्रुतपदं निष्क्रान्तः ।

**सानुमती**—अण्णसंकन्तहिअओ वि पढमसंभावणं अवेक्खदि ठिरसोहदो एसो दाणिं ।

अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते स्थिरसौहृद एष इदानीम् ।

(प्रविश्य पत्रहस्ता)

**प्रतीहारी**— जेदु देवो । जयतु देवः ।

**राजा**—वेत्रवति, न खल्वन्तरा दृष्टा त्वया देवी ।

**प्रतीहारी**—अह इं । पत्तहत्थं मं देक्खिअ पडिणिउत्ता ।

अथ किम् । पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता ।

**राजा**—कार्यज्ञा कार्योपरोधं मे परिहरति ।

**प्रतीहारी**—देव, अमच्चो विण्णवेदि । अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं पच्चवेक्खिदं । तं देवो पत्तारूढं पच्चक्खीकरेदु त्ति ।

---

आत्मा । आत्मानमिति भण । यदि भवानन्तःपुरकलहान्मुच्यते ततो मां मेघप्रतिच्छन्दे प्रासादे शब्दापय । मेघप्रतिच्छन्द इति तस्य प्रासादस्य संज्ञा । अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते स्थिरसौहृद एष इदानीम् । जयतु देवः । अथ किम् । पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता । देव अमात्यो विज्ञापयति, अर्थजातस्य गणनाबहुलतयाद्य एकमेव पौरकार्यं

देव, अमात्यो विज्ञापयति । अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यं प्रत्यवेक्षितम् । तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति ।

**राजा**—इतः पत्रिकां दर्शय ।

(प्रतीहार्युपनयति ।)

**राजा**—(अनुवाच्य) कथम् । समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसनेन विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्यार्थसंचय इत्येतदमात्येन लिखितम् । (सविषादं) कष्टं खल्वनपत्यता । वेत्रवति, महाधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात् ।

**प्रतीहारी**—देव, दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।

देव, इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते ।

**राजा**—ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ । एवममात्यं ब्रूहि ।

---

प्रत्यवेक्षितम् । तत्तावत् पत्रारूढं देवः प्रत्यक्षीकरोत्विति । देव, इदानीं तस्य जाया साकेतश्रेष्ठिनो दुहिता निर्वृत्तपुंसवना श्रूयते । ननु गर्भः गर्भस्थः पित्र्यं पितृसंबन्धि रिक्थं धनं दायमर्हति । अत्र पत्नीषु विद्यमानासु विभक्तस्यापुत्रस्य वित्तं पत्न्यादयो गृह्णीयुरिति 'पत्नी दुहितरश्च' इत्यादिवचनबलात् विज्ञानेश्वरेण पत्न्यादीनां धनग्रहणे प्रतिपादितमेतत् । तत्कथं पत्नीं परिहृत्य गर्भाभावे धनस्य राजगामित्वं प्रतिपादितमिति नाशङ्कनयिम् । विज्ञानेश्वरादिभ्यः पूर्वैर्धारेश्वरादिभिः—'अदायिकं राजगामि योषिद्भृत्यौर्ध्वदैहिकम् । अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत् ॥ अन्यत्र ब्राह्मणात्किंतु राजधर्मपरायणः । तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥' इति अपुत्रकधनस्य राजगा-

**प्रतीहारी**—जं देवो आणवेदि । यद्देव आज्ञापयति । [इति प्रस्थिता ।

**राजा**—एहि तावत् ।

**प्रतीहारी**—इअम्हि । इयमस्मि ।

**राजा**—किमनेन संततिरस्ति नास्तीति ।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २३ ॥

**प्रतीहारी**—एव्वं णाम घोसइदव्वं । (निष्क्रम्य पुनः प्रविश्य) काले पविट्ठं विअ अहिणन्दिदं देवस्स सासणम् ।

एवं नाम घोषयितव्यम् । (निष्क्रम्य पुनः प्रविश्य) काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम् ।

**राजा**—(दीर्घमुष्णं च निःश्वस्य) एवं भोः संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रिय एष एव वृत्तान्तः ।

---

मित्वं प्रतिपादितम् । अतस्तदानींतनेन कविना तद्व्याख्यानुसारेण इत्थमुक्तमित्यनुसंधेयम् । तद्व्याख्यानं च—अदायिकं न विद्यते दायी यस्य तत् अदायिकं अपुत्रकमित्यर्थः । तद्धनं राजगामि राज्ञः स्वं भवति । योषिद्भृत्यौर्ध्वदैहिकमपास्य तत्पत्नीनामशनाच्छादनोपयुक्तं धनिनः श्राद्धाद्युपयुक्तं धनं च परिहृत्यान्यद्राजगामि भवतीति । यद्देव आज्ञापयति । इयमस्मि । **येन येनेत्यादि** ॥ प्रजा जनाः येन स्निग्धेन स्नेहवता बन्धुना पितापुत्रादिना वियुज्यन्ते वियुक्ता भवन्ति । तासां वियुक्तानां स दुष्यन्तः पापं विना बन्धुः । यस्य पिता नास्ति तस्य पिता । यस्य पुत्रो नास्ति तस्य पुत्रः । यस्य भ्राता नास्ति तस्य भ्रातेति । घुष्यतां घोषणं क्रियताम् । पटहवाद्यपुरस्सरं नगरे प्रकाश्यतामित्यर्थः । पापादृत इत्यनेन यस्याः पतिर्नास्ति तस्याः पतिर्नाहम् । किंतु पुत्रादिवत्पोषकत्वादहमेव कर्तेत्यभिप्रायो गम्यते । एवं नाम घोषयितव्यम् । अत्र काकुरनुसंधेया ।

**प्रतीहारी**—पडिहदं अमङ्गळम् । प्रतिहतममङ्गलम् ।

**राजा**—धिङ्मामुपस्थितश्रेयोऽवमानिनम् ।

**सानुमती**—असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा ।

असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ।

**राजा**—

**संरोपितेऽप्यात्मनि धर्मपत्नी**
**त्यक्ता मया नाम कुलप्रतिष्ठा ।**
**कल्पिष्यमाणा महते फलाय**
**वसुंधरा काल इवोप्तबीजा ॥ २४ ॥**

**सानुमती**—अपरिच्छिण्णा दाणिं दे संददी भविस्सदि ।

अपरिछिन्नेदानीं ते संततिर्भविष्यति ।

**चतुरिका**—(जनान्तिकं) अए, इमिणा सत्थवाहवुत्तन्तेण विमणाअदि भट्टा । णं अस्सासेदुं मेहप्पडिच्छन्दादो अज्जमाढव्वं गेण्हिअ आअच्छामि ।

(जनान्तिकं) अये, अनेन सार्थवाहवृत्तान्तेन विमनायते भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यमाढव्यं गृहीत्वागच्छामि ।

---

काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम् । प्रतिहतममङ्गलम् । असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । **संरोपित इति** ॥ आत्मनि स्वस्मिन् संरोपिते गुप्ते सति । यस्मादात्मैव पत्न्यां जायते तस्मात् आत्मनि संरोपित इत्युक्तम् । तथा च श्रुतिः—"अङ्गादङ्गात्संभवसि हृदयादधिजायसे" इति । अपरिच्छिन्ना इदानीं संततिर्भविष्यति । अनेन सार्थवाहवृत्तान्तेन विमनायते भर्ता । त्वं गत्वा मेघप्रतिच्छन्दादार्यं माण्डव्यं गृहीत्वा आगच्छ ।

**प्रतीहारी**—सुट्ठु भणासि । सुष्ठु भणसि ।

[इति निष्क्रान्ता चतुरिका ।

**राजा**—अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः ।

**अस्मात्परं बत यथाश्रुति संभृतानि**
**को नः कुले निवपनानि करिष्यतीति ।**
**नूनं प्रसूतिविकलेन मया प्रसिक्तं**
**धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २५ ॥**

[इति मोहमुपगतः ।

**प्रतीहारी**—(ससंभ्रममवलोक्य) समस्ससदु भट्टा । समाश्वसितु भर्ता ।

**सानुमती**—हद्धी हद्धी । सदि क्खु दीवे व्ववहाणदोसेण एसो अन्धआरं अणुहोदि । अहं दाणिं एव्व णं णिव्वुदं करेमि । अहवा सुदं मए सउन्दलं समस्ससअन्तीए महेन्दजणणीए मुहादो—जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्सन्ति, जह तुमं धम्मपदिणिं अइरेण भट्टा अहिणन्दिस्सदि त्ति । ता जुत्तं एदं कालं पडिपालेदुं । जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि ।

---

सुष्ठु भणसि । **अस्मात्परमिति** ॥ धौतमश्रु येन तत् तथोक्तं, तस्मात् शेषमवशिष्टम् । आश्वसितु भर्ता । विद्यमानेऽपि दीपे व्यवधानदोषेण एषोऽन्धकारमनुभवति । अहमिदानीमेव एनं निर्वृतं करिष्यामि । अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात्—यज्ञभागपर्युत्सुका देवा एव तथा अनुष्ठास्यन्ति, यथा त्वां धर्मपत्नीमचिरेण भर्ताऽभिनन्दयिष्यतीति । अत्राप्तवचनेन भाविकार्यस्य ज्ञातत्वात् प्ररोचनं नाम संध्यङ्गमुक्तम् । 'यथातदर्शनाद्भाविदर्शनं सा प्ररोचना' इति । तस्माद्युक्त-

हा धिक् हा धिक् । सति खलु दीपे व्यवधानदोषेणैषोऽन्धकार-मनुभवति । अहमिदानीमेवैनं निर्वृतं करोमि । अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात्—यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथा त्वां धर्मपत्नीमचिरेण भर्ताभिनन्दिष्यतीति । तद्युक्तमेतं कालं प्रतिपालयितुम् । यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि ।

[इत्युद्भ्रान्तकेन निष्क्रान्ता ।

(नेपथ्ये)

अब्बह्मण्णम् अब्बह्मण्णम् । अब्रह्मण्यम् अब्रह्मण्यम् ।

**राजा**—(प्रत्यागतचेतनः कर्णं दत्त्वा)

अये, माढव्यस्येवार्तस्वरः । कः कोऽत्र भोः ।

(प्रविश्य)

**चतुरिका**—(ससंभ्रमं) परित्ताअदु देवो संसअगदं वअस्सम् ।

(ससंभ्रमं) परित्रायतां देवः संशयगतं वयस्यम् ।

**राजा**—केनात्तगन्धो माणवकः ।

**चतुरिका**—देव, अदिट्ठरूवेण केण वि सत्तेण अक्कमिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो ।

देव, अदृष्टरूपेण केनापि सत्त्वेनाक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः ।

**राजा**—(उत्थाय) मा तावत् । ममापि सत्त्वैरभिभूयन्ते गृहाः ।

अथवा ।

---

मेतं कालं प्रतिपालयितुम् । अनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि । उद्भ्रान्तेन उद्भ्रमणेन आकाशं प्रत्युद्गमनेनेत्यर्थः । अब्रह्मण्यं नाम रक्षकं प्रति वध्यस्याक्रोशः । 'अवध्योक्तावब्रह्मण्यम्' इति रचयेदिति । परित्रायतां भर्ता संशयगतं वयस्यम् । देव, अदृष्टरूपेण केनापि सत्त्वेनाक्रम्य

अहन्यहन्यात्मन एवताव-
ज्ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतो वेदितुमस्ति शक्तिः ॥ २६ ॥

(नेपथ्ये)

भो वअस्स, अविहा अविहा । भो वयस्य, अविहा अविहा ।

राजा — (गतिभेदेन परिक्रामन्) सखे, न भेतव्यं, न भेतव्यम् !

(नेपथ्ये)

(पुनस्तदेव पठित्वा) कहं ण भाइस्सं । एसो मं को वि पच्चा अवणदसिरोहरं इक्खुं विअ तिक्खभङ्गं करेदि ।

(पुनस्तदेव पठित्वा) कथं न भेष्यामि । एष मां कोऽपि पश्चादवनतशिरोधरमिक्षुमिव तीक्ष्णभङ्गं करोति ।

राजा—(सदृष्टिक्षेपं) धनुस्तावत् ।

---

मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः । मा तावत् । मेति निपातो वारणे । विदूषकप्रसङ्गस्तावदास्ताम् । ममापीत्यनेन आत्मनो निर्दुष्टता गम्यते । उत्थायेत्यादिना अभिभूयन्ते गृहा इत्यन्तेन संरम्भस्य गम्यमानत्वात् विरोधनं नाम संध्यङ्गमुक्तम् । संरम्भाद्वा विरोधनमिति । अथवेति पक्षान्तरे । अहन्यहनि आत्मन एव स्वस्यैव प्रमादेन अनवधानतया प्राप्तं स्खलितं दुराचरणं तावत् साकल्येन ज्ञातुं न शक्यम् । प्रजासु जनेषु केन पथा सता वा असता वा मार्गेण कः प्रयाति चरतीत्यशेषतः साकल्येन वेदितुं ज्ञातुं शक्तिः सामर्थ्यमस्ति । अस्तीत्यत्र काकुरनुसंधेया । न केवलं स्वदोषादेव, प्रजादोषादपि राज्ञः अनर्था भवन्तीत्यभिप्रायः । अविहेत्याक्रोशे । गतिभेदेन गत्यन्तरेण त्वरितगमनेनेत्यर्थः । अत्रभवन् कथं न बिभेमि । एष मां कोऽपि पश्चादवनतशिरोधरमिक्षुमिव तीक्ष्णभङ्गं करोति । अत्र हिंसाया गम्यमानत्वात् विद्रव इति संध्यङ्गमुक्तम् । 'विद्रवः कथ्यते बन्धुवधसंताडनादिकः' इति । भर्तः,

(प्रविश्य शार्ङ्गहस्ता)

**यवनी**—भट्टा, इदं सरासणं हत्थावावसहिदं ।

भर्तः, इदं शरासनं हस्तावापसहितम् ।

[राजा सशरं धनुरादत्ते ।

(नेपथ्ये)

**एष त्वामभिनवकण्ठशोणितार्थी**
**शार्दूलः पशुमिव हन्मि वेष्टमानम् ।**
**आर्तानां भयमपनेतुमात्तधन्वा**
**दुष्यन्तस्तव शरणं भवत्विदानीम् ॥ २७ ॥**

**राजा**—(सरोषं) कथं मामेवोद्दिशति । तिष्ठ कुणपाशन, न त्वमिदानीं भविष्यसि । (शार्ङ्गमारोप्य) वेत्रवति, सोपानमार्गमादेशय ।

**प्रतीहारी**—इदो इदो देवो ।

इत इतो देवः ।

(सर्वे सत्वरमुपसर्पन्ति ।)

**राजा**—(समन्ताद्विलोक्य) शून्यं खल्विदम् ।

---

इदं शरासनं हस्तावापसहितम् । हस्तावापो नाम ज्याघातवारणं गोधाचर्मोच्यते । **एष त्वामिति** ॥ वेष्टमानं लुठन्तम् । शरणं भवतु रक्षको भवतु नाम । अत्र महाधीरस्य दुष्यन्तस्य नामग्रहणाधिक्षेपाद्द्रव इति संध्यङ्गमुक्तं भवति । 'द्रव इत्युच्यते तज्ज्ञैस्तिरस्कारो महात्मनाम्' इति । अत्रैवं महान्तं दुष्यन्तमधिक्षिपता मातलिना आत्मश्लाघाकरणाद्विचलनं नाम संध्यङ्गमुक्तम् । 'विकत्थनाद्विचलनम्' इति । अत्रैकस्मिन् उदाहरणे कथमङ्गद्वयविधानामिति न शङ्कनीयम् । 'एकस्य बहुशो वा स्यादनेकस्य सहापि वा' इति वचनात् । कथं मामित्यादिना न त्वमिदानीं भविष्यसीत्यन्तेन दोषकथनात् संफेटो नाम संध्यङ्गमुक्तम् । 'संफेटः स

(नेपथ्ये)

अविहा अविहा। अहं अत्तभवन्तं पेक्खामि। तुमं मं ण पेक्खसि। बिडालगहीदो मूसओ विअ णिरासो म्हि जीविदे संवुत्तो।

अविहा अविहा। अहमत्रभवन्तं पश्यामि। त्वं मां न पश्यसि। बिडालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः।

राजा—भोस्तिरस्करिणीगर्वित, मदीयमस्त्रं त्वां द्रक्ष्यति। एष तमिषुं संदधे,

**यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम्।**
**हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः॥ २८॥**

[इत्यस्त्रं संधत्ते।

(ततः प्रविशति विदूषकमुत्सृज्य मातलिः।)

मातलिः—राजन्,

**कृताः शरव्यं हरिणा तवासुराः**
**शरासनं तेषु विकृष्यतामिदम्।**
**प्रसादसौम्यानि सतां सुहृज्जने**
**पतन्ति चक्षूंषि न दारुणाः शराः॥ २९॥**

हि विज्ञेयो यद्दोषपरुषं वचः' इति। अविहा अविहा। अहमत्रभवन्तं पश्यामि। त्वं मां न पश्यसि। बिडालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः। मूसयो इत्यत्र मूषिकविभीतकेत्यादिना इकारस्यात्वम्। **यो हनिष्यतीति॥** स्पष्टः। भोस्तिरस्करिणीत्यादिना वर्जयत्यप इत्यन्तेन दुष्यन्तेन स्वशक्तिकथनात् व्यवसाय इति संध्यङ्गमुक्तम्। 'व्यवसायः स्वशक्तितः' इति। **कृताः शरव्या इति॥** स्पष्टम्। अत्र सुहृज्जने प्रसादसौम्यानि चक्षूंषि पतन्ति। दारुणाः शरा न पतन्तीत्यनेन सान्त्वनेन दुष्कृतविरोधशमनाच्छक्तिरिति संध्यङ्गमुक्तम्। विरोध-

राजा—(अस्त्रमुपसंहरन्) अये, मातलिः। स्वागतं महेन्द्रसारथे।

(प्रविश्य)

विदूषकः—अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणन्दीअदि।

अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते।

मातलिः—(सस्मितं) आयुष्मन्, श्रूयतां यदस्मि हरिणा भवत्सकाशं प्रेषितः।

राजा—अवहितोऽस्मि।

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः।

राजा—अस्ति। श्रुतपूर्वं मया नारदात्।

मातलिः—

सख्युस्ते स किल शतक्रतोरजय्य-
स्तस्य त्वं रणशिरसि स्मृतोऽसि हन्ता।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः॥ ३०॥

स भवानात्तशस्त्र एव इदानीमैन्द्रं रथमारुह्य विजयाय प्रतिष्ठताम्।

---

शमनाच्छक्तिरिति। अहं येनेष्टिपशुमारं मारितः सोऽनेन राज्ञा स्वागतेनाभिनन्द्यते। इष्टिपशुमारं मारित इत्यत्र 'उपमाने कर्मणि च' इति णमुल्। कषादित्वादनुप्रयोगः। **सख्युस्ते स इति**॥ स्पष्टम्। अत्र दुर्जयानपि राक्षसान् हन्तुं त्वमेव समर्थ इत्यनेन दुष्यन्तशौर्यमहत्त्वस्य कीर्तितत्वात् प्रसङ्गो नाम संध्यङ्गमुक्तम्। 'गुरुकीर्तनं प्रसङ्ग' इति। अत्रैव असुरविजयप्रयाणस्य क्रमेण सपुत्रशकुन्तलाप्राप्तिहेतुत्वादाधानं नाम संध्यङ्गमुक्तम्। 'आधानं कार्य-

राजा—अनुगृहीतोऽस्म्यनया मघवतः संभावनया । अथ माढव्यं प्रति भवता किमेवं प्रयुक्तम् ।

मातलिः—तदपि कथ्यते । किंनिमित्तादपि मनःसंतापादायुष्मान्मया विक्लवो दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणं कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः ॥ ३१ ॥

राजा—युक्तमनुष्ठितं भवद्भिः । (जनान्तिकं) वयस्य, अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यमार्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः ॥ ३२ ॥ इति ।

विदूषकः—जं भवं आणवेदि । यद्भवानाज्ञापयति । [इति निष्क्रान्तः ।

मातलिः—आयुष्मान्रथमारोहतु ।

(राजा रथाधिरोहणं नाटयति ।)

(इति निष्क्रान्ताः सर्वे ।)

इति षष्ठोऽङ्कः ।

---

संग्रह' इति । **ज्वलतीति** ॥ विप्रकृतः अपकृतः पन्नगः फणं कुरुते दशतीत्यर्थः । जनो हि प्रायः कोपात् स्वं महिमानं प्रतिपद्यते । अथ माण्डव्यमित्यादि प्रतिपद्यते हि जन इत्यन्तेन दुष्यन्तवैक्लव्यशमनार्थं मातलिकल्पितस्य विदूषकग्रहणरूपव्याजस्य प्रतीतेः छद्मं नाम संध्यङ्गमुक्तम् । 'छद्मं स्याद्व्याजकल्पितम्' इति । **त्वन्मतिरिति** ॥ स्पष्टम् । यद्भवानाज्ञापयति ॥

॥ इति षष्ठोऽङ्कः ॥

# ॥ सप्तमोऽङ्कः ॥

(ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च ।)

**राजा**—मातले, अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषा-
दनुपयुक्तमिवात्मानं समर्थये ।

**मातलिः**—(सस्मितं) आयुष्मन्, उभयमप्यपरितोषं समर्थये ।

**प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवान् ।**
**गणयत्यपदानविस्मितो भवतः सोऽपि न सत्क्रियागुणान् ॥१॥**

**राजा**—मातले, मा मैवम् । स मनोरथानामप्यभूमिर्वि-
सर्जनावसरसत्कारः । मम हि दिवौकसां समक्षमर्धासनोप-
वेशितस्य,

**अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।**
**आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥ २ ॥**

**मातलिः**—किमिव नामायुष्मानमरेश्वरान्नार्हति । पश्य ।

---

॥ अथ सप्तमोऽङ्कः ॥

कविरिदानीमङ्कान्तरमारभते—**ततः प्रविशतीति** ॥ उभयमप्य-
परितोषम् भवानब्रवीत् । द्वावप्यन्योन्यमपरितुष्टावित्यर्थः । **प्रथमोपकृत-
मिति** ॥ मरुत्वतः इन्द्रस्य प्रतिपत्त्या संभावनया प्रथमोपकृतिं राक्षसजयरूपं
पूर्वोपकारम् । सोऽपि मरुत्वानपि अपदानेन कृतेन कर्मणा विस्मितः सत्क्रिया-
गुणान् संभावनादिविशेषान् न गणयति, न संख्यायति, न बहुमन्यत इत्यर्थः।
मनोरथानामप्यभूमिः अविषय इत्यर्थः । **अन्तर्गत इति** ॥ स्पष्टः ।

सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

राजा—मा मैवम् । अत्र खलु शतक्रतोरेव महिमा स्तुत्यः । कुतः,

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाऽभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

मातलिः—सदृशमेवैतत् । (स्तोकमन्तरमतीत्य) आयुष्मन्, इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु ।
संचिन्त्य गीतक्षममर्थबन्धं दिवौकसस्त्वच्चरितं लिखन्ति ॥५॥

---

**सुखपरस्येति** ॥ अधुना इदानीम् आनतपर्वभिः आनतानि आसन्नानि पर्वाणि ग्रन्थयो येषां तैः शरैः । पुरा पुरुषकेसरिणः नृसिंहस्य नतानि मग्नानि पर्वाणि अङ्गुलिसंधयो येषां तैः नखैश्च । दानवा एव कण्टकाः क्षुद्रशात्रवः उद्धृता यस्मिन्कर्मणि तत्तथोक्तम् । कृतं विरचितं त्रिदिवं स्वर्गं पश्यावलोकयेति संबन्धः । अथवा त्रिदिवमुद्धृतदानवकण्टकं कृतमित्यन्वयः । त्रिदिवशब्दस्य नपुंसकत्वमुक्तम्—'स्वः स्वर्गः सुरसद्म त्रिदिवादासस्त्रिविष्टपम् । त्रिदिवं' इति ॥ **सिध्यन्तीति** ॥ नियोज्याः प्रेष्याः महत्स्वपि गुरुष्वपि कर्मसु क्रियासु सिध्यन्ति साधयन्तीति यत् तदीश्वराणां प्रभूणां संभावनागुणं सत्कारविशेषमवेहि । अत्र दृष्टान्तमाह—अरुणः अनूरुः तमसां तिमिराणां विभेत्ता अभविष्यत् किं वा । किंवेति प्रश्ने । सहस्रकिरणः तमनूरुं धुर्यग्रे पुरोभागे नाकरिष्यच्चेत् । 'लिङ्-निमित्ते लृङ् क्रियातिपत्तौ' इति लृङ् । सदृशमेवैतत् । **विच्छित्तिशेषैरिति** ॥ अमी दिवौकसो देवाः गीतक्षमं गानयोग्यं सुकुमारमित्यर्थः । अर्थो

**राजा**—मातले, असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितो मया स्वर्गमार्गः। कतमस्मिन्मरुतां पथि वर्तामहे।

**मातलिः**—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

**राजा**—मातले, अतः खलु सबाह्यकरणो ममान्तरात्मा प्रसीदति। (रथाङ्गमवलोक्य) मेघपदवीमवतीर्णौ स्वः।

---

बध्यतेऽस्मिन्निति अर्थबन्धः। पदं संचिन्त्य विचार्य कल्पलतांशुकेषु। कल्पलतासु अंशुकाभरणादीनि विद्यन्त इति प्रसिद्धिः। सुरसुन्दरीणां विच्छित्तिशेषैः विच्छित्तेः शेषैः अवशिष्टैः वर्णैः कुङ्कुमकस्तूरिकादिवर्णकैः त्वच्चरितं तवापदानं लिखन्ति। विच्छित्तिर्नाम लेपानादरेण स्तोकादानम्। रम्याणामपि अलङ्कारकुसुमालेपवाससामनादरेण स्वल्पानां न्यासो विच्छित्तिरुच्यत इति वचनात्। **त्रिस्रोतसमिति** ॥ यो वायुः। गगनं प्रतिष्ठा आस्पदं यस्यास्ताम्। त्रिस्रोतसं मन्दाकिनीमित्यर्थः। ज्योतींषि सप्तर्षिधिष्ण्यानि। प्रविभक्ता असंकीर्णाः रश्मयस्तेजांसि यस्मिन्कर्मणि तत्तथोक्तम्। वर्तयति संचारयति। द्वितीयेन हरेर्विक्रमेण पादन्यासेन निस्तमस्कं निर्दोषं तस्य परिवहस्य वायोः मार्गं पन्थानमिमं गृणन्ति आमनन्ति। परिवहो नाम स्वर्गङ्गासप्तर्षिमण्डलप्रवर्तकः षष्ठो वायुस्कन्धः। यथोक्तं—'आवहः प्रवहश्चैव संवहश्चोद्वहस्तथा। विवहाख्यः परिवहः परावह इति क्रमात् ॥ सप्तैते मारुतस्कन्धा महर्षिभिरुदीरिताः। आवहो वर्तयेद्वायुर्मेघोल्कावृष्टिविद्युतः ॥ वर्तयेत्प्रवहश्चाथ तथा मार्ताण्डमण्डलम्। संवहो मारुतस्कन्धस्तथा शीतांशुमण्डलम् ॥ वर्तयेदुद्वहश्चापि तथा नक्षत्रमण्डलम्। पञ्चमो विवहाख्यस्तु तथा च ग्रहमण्डलम् ॥ सप्तर्षिमण्डलं स्वर्गं षष्ठः

मातलिः—कथमवगम्यते ।

राजा—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

मातलिः—क्षणादायुष्मान्स्वाधिकारभूमौ वर्तिष्यते ।

राजा—(अधोऽवलोक्य) वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथाहि ।

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
संतानैस्तनुभावनष्टसलिला व्यक्तिं व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव मर्त्यभुवनं मत्पार्श्वमानीयते ॥ ८ ॥

---

परिवहस्तथा । परावहस्तथा वायुर्वर्तयेद्ध्रुवमण्डलम् ॥' **अयमरविवरेभ्य इति** ॥ शीकरैः अम्बुकणैः क्लिन्ना नेमिः प्रधिर्यस्य स तथोक्तः । हेतुगर्भमिदं विशेषणम् । अयं रथः अरविवरेभ्यः अराणां नेम्यवष्टम्भदण्डाकारकचक्रावयवानां विवरेभ्यः अन्तरालप्रदेशेभ्यः निष्पतद्भिर्निर्गच्छद्भिः । चातकैः मेघोपजीविपक्षिविशेषैः । अचिरभासां विद्युतां तेजसा प्रभया अनुलिप्तैः रूषितैः हरिभिरश्वैश्च । वारिगर्भोदराणां वारि गर्भे येषां तानि उदराणि येषां तेषाम् । घनानां मेघानाम् । उपरि ऊर्ध्वभागे गतं गमनम् । भावे निष्ठा । पिशुनयति सूचयति । आत्माधिष्ठानभूमौ मनुष्यलोके । **शैलानामिति** ॥ उन्मज्जताम् उद्गच्छतां शैलानां शिखरात् शृङ्गात् मेदिनी अवरोहतीव । अतिदूरतया ये शैलाः महीतलसमा दृष्टाः पश्चात् किंचित्संनिकृष्टतया शिखरादिव्यक्तिः

**मातलिः**—साधु दृष्टम् । (सबहुमानमवलोक्य ।) अहो, उदग्ररमणीया पृथिवी ।

**राजा**—मातले, कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी सांध्य इव मेघपरिघः सानुमानालोक्यते ।

**मातलिः**—आयुष्मन्, एष खलु हेमकूटो नाम किंपुरुषपर्वतः परं तपस्विनां सिद्धिक्षेत्रम् । पश्य ।

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति ॥ ९ ॥

**राजा**—तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

**मातलिः**—प्रथमः कल्पः । [नाट्येनावतीर्णौ ।

---

तेषामुन्मज्जत्तया पृथग्भूततया दृष्टत्वात् भूमेरवतरणं च । पादपा वृक्षाः स्कन्धोदयात् प्रकाण्डाविर्भावात् पर्णाभ्यन्तरलीनतां विजहति त्यजन्ति । तनुभावनष्टसलिलाः तनुभावेन तनुत्वेन नष्टमदृष्टं सलिलं यासां तास्तथोक्ताः । आपगा नद्यः संतानात् जलविस्तारात् व्यक्तिं स्फुटत्वं व्रजन्ति । उत्क्षिपता उन्नमयता केनापि पुरुषेण मर्त्यभुवनं मर्त्यलोकः मत्पार्श्वं मत्समीपम् आनीयत इव प्राप्यत इव । वेगादवतरतामीदृशी प्रतिपत्तिरुत्पद्यत इति भावः । **स्वायंभुवादिति** ॥ स्वायंभुवात् ब्रह्मसूनोः । स्वयंभुवोऽपत्यं पुमान् स्वायंभुवः । 'ओर्गुण' इत्यत्र 'संज्ञापूर्वको विधिरनित्य' इति गुणस्याभावादुवङादेशः । मरीचेः पुत्रः प्रजापतिः प्रबभूव उद्भूतः । सुरासुरगुरुः कश्यप इत्यर्थः । तस्मिन् हेमकूटे । सपत्नीकः पत्न्या अदित्या सह वर्तत इति स तथोक्तः । तपस्यति तपश्चरति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यप् । अनतिक्रमणीयानि अनुल्लङ्घनीयानि । श्रेयांसि शुभानि । अत्र

राजा—(सविस्मयं)

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुन्धत-
स्तवावतीर्णोऽपि न लक्ष्यते रथः ॥ १० ॥

मातलिः—एतावानेव शतक्रतोरायुष्मतश्च विशेषः ।

राजा—मातले, कतमस्मिन्प्रदेशे मारीचाश्रमः ।

मातलिः—(हस्तेन दर्शयन्)

वल्मीकार्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११ ॥

---

श्रेयांसि कश्यपनमस्कारादीनि । प्रथमः कल्पः, मुख्यः पक्षः । **उपोढेति** ॥ निरुन्धतः निगृह्णतः । तव रथः अवतीर्णोऽपि महीतलं प्राप्तोऽपि । न लक्ष्यते, अवतीर्ण इति न ज्ञायते । अत्र हेतुमाह—रथाङ्गनेमयः यत उपोढशब्दाः प्राप्तध्वनयो न भवन्ति । रजश्च यतः प्रवर्तमानं सत् न दृश्यते । तस्मादिति संबन्धः । एतद्द्वयं कुत इति चेत् । अभूतलस्पर्शतया हेतुनेत्यवगन्तव्यम् । शतक्रतोः इन्द्रस्य आयुष्मतस्तव च विशेषो भेदः एतावानेव । भूतलस्पर्श-राहित्यं भूतलस्पर्शश्चेत्यर्थः । **वल्मीकार्धेत्यादि** ॥ वल्मीके अर्धं निमग्ना मूर्तिः कायो यस्य स तथोक्तः । योगासिकायां पश्चादुत्पन्नेन वल्मीकेन अर्धा-वृतशरीर इत्यर्थः । संदष्टसर्पत्वचा आश्लिष्टनिर्मोकेन उरसोपलक्षितः । जीर्णलताप्रतानवलयेन जीर्णानां वल्लीनां प्रतानं स एव वलयः तेन । गले कण्ठे अत्यन्तं संपीडितः निरुद्धः । अंसं व्याप्नोतीत्यंसव्यापि । शकुन्तनीडनि-

**राजा**—नमोऽस्मै कष्टतपसे ।

**मातलिः**—(संयतप्रग्रहं रथं कृत्वा) महाराज, एतावदितिपरिवर्धित-मन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

**राजा**—स्वर्गादधिकतरं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

**मातलिः**—(रथं स्थापयित्वा) अवतरत्वायुष्मान् ।

**राजा**—(अवतीर्य) मातले, भवान्कथमिदानीम् ।

**मातलिः**—संयन्त्रितो मया रथः । अहमप्यवतरामि । (तथा कृत्वा) इत आयुष्मन् । [उभौ परिक्रामतः ।

**मातलिः**—दृश्यन्तामत्रभवतां तपोधनानां तपोवनभूमयः ।

**राजा**—ननु विस्मयादवलोकयामि ।

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने**
**तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।**
**ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो**
**यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ १२ ॥**

---

चितं पक्षिकुलायपूरितं जटामण्डलं बिभ्रत् धारयन् असौ पुरोवर्ती मुनिः तपोधनः । यत्र यस्मिन्प्रदेशे स्थाणुरिव शाखाहीनतरुस्कन्ध इव अचलः स्थिरः सन् । अभ्यर्कबिम्बं सूर्यमण्डलाभिमुखं स्थितः तत्र मरीचाश्रम इति संबन्धः । कष्टतपसे कष्टं कृच्छ्रं दुष्करं तपो यस्य स तथोक्तः । अस्मै मुनये नमः । **प्राणानामिति** ॥ एषां मुनीनां सत्कल्पवृक्षे विद्यमानकल्पवृक्षे उचिता योग्या प्राणानां वृत्तिः जीवनम् अनिलेन भवति । न स्वादुफलादिभिरिति गम्यते । काञ्चनपद्मरेणुकपिशे तोये धर्माभिषेकक्रिया धर्मार्थस्नानाचरणं भवति, न तु जलक्रीडेति गम्यते । रत्नशिलातलेषु ध्यानं भवति, न तु

**मातलिः**—उत्सर्पिणी खलु महतां प्रार्थना । (परिक्रम्य आकाशे) अये वृद्धशाकल्य, किमनुतिष्ठति भगवान्मारीचः । किं ब्रवीषि । दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति ।

**राजा**—(कर्णं दत्त्वा) तर्हि प्रतिपाल्यावसरः प्रस्तावः ।

**मातलिः**—(राजानमवलोक्य) अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान्, यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ।

**राजा**—यथा भवान्मन्यते । (इति स्थितः ।)

**मातलिः**—आयुष्मन्, साधयाम्यहम् । [इति निष्क्रान्तः ।

**राजा**—(निमित्तं सूचयित्वा)

**मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।**
**पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १३ ॥**

---

विहार इति गम्यते । विबुधस्त्रीसंनिधौ दिव्याङ्गनासमीपे संयमः नियतेन्द्रियत्वं, न तु संभोग इति गम्यते । एभिः सत्कल्पवृक्षेत्यादिभिः अयं प्रदेशः स्वर्ग इति प्रतीयते । अन्ये मुनयः तपोभिः यत्स्थानं काङ्क्षन्ति तस्मिन् स्वर्गे स्वर्गप्रदेशे अमी मुनयः तानि फलानि परिहृत्य तपस्यन्तीत्यनेन तेषां मोक्षार्थित्वं गम्यते । उत्सर्पिणी खलु उद्गमनशीला अतिशायिनीत्यर्थः । महतां प्रार्थना स्पृहा । तर्हि तथा चेत् । प्रतिपालनीयः प्रस्तावः । अस्मिन्नशोकवृक्षमूले तच्छायायामास्तां निषीदतु । निमित्तं सूचयित्वा, शकुनं निरूप्य । **मनोरथायेति** ॥ अहं मनोरथाय इष्टवस्तुने । लाक्षणिकोऽयं प्रयोगः । नाशंसे । शंसीरिच्छायामित्यात्मनेपदम् । मनोरथं प्राप्तुं नेच्छामीत्यर्थः । 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' इति चतुर्थी । हे बाहो त्वं किं किमर्थं स्पन्दसे स्फुरसि । हि यस्मात् कारणात् पूर्वावधीरितं श्रेयः शकुन्तलारूपं शुभं दुःखं सत् परिवर्तते परिणमते । तस्मात् किमर्थं स्पन्दसे इति

(नेपथ्ये)

मा क्खु चावलं करेहि । कहं गदो एव्व अत्तणो पकिदिं ।

मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् ।

**राजा**—(कर्णं दत्त्वा) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । (शब्दानुसारेणावलोक्य, सविस्मयं) अये, को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ।

**अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।**
**प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १४ ॥**

(ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः ।)

**बालः**—जिम्भ सिङ्घ, दन्ताइं दे गणइस्सं ।

जृम्भस्व सिंह, दन्तांस्ते गणयिष्यामि ।

**प्रथमा**—अविणीद, किं णो अवच्चणिव्विसेसाइ सत्ताणि विप्पअरेसि । हन्त, वड्ढइ दे संरम्भो । ठाणे क्खु इसिजणेण सव्वदमणो त्ति किदणामहेओ सि ।

अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त, वर्धते ते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

---

संबन्धः । अत्र पूर्वावधीरितं श्रेय इत्यनेन शकुन्तलारूपबीजस्मरणात् निर्वहणसंधेः संधिर्नाम प्रथमाङ्गमुक्तम् । 'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥' अस्याङ्गानि— 'संधिर्विरोधो ग्रथनं निर्णयः परिभाषणम् । प्रसादानन्दसमयाः कृतिर्बाष्पोपगूहने ॥ पूर्वभागोपसंहारौ प्रशस्तिश्च चतुर्दश ।' अत्र संधिस्तु बीजोपगमनं भवेदिति । मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् । **अर्धेति** ॥ स्पष्टः । जृम्भस्व सिंह । दन्तांस्ते गणयिष्यामि । अविनीत किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि ताडयसि । हन्त वर्धतेऽस्य संरम्भः । स्थाने

राजा—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः । नूनमनपत्यता मां वत्सलयति ।

द्वितीया—एसा क्खु केसरिणी तुमं लङ्घेदि जइ से पुत्तअं ण मुञ्चेसि ।

एषा खलु केसरिणी त्वां लङ्घयति यद्यस्याः पुत्रकं न मुञ्चसि ।

बालः—(सस्मितं) अम्हहे, बलिअं क्खु भीदो म्हि ।

(सस्मितं) अहो बलवत्खलु भीतोऽस्मि । [इत्यधरं दर्शयति ।

राजा—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥ १५ ॥

प्रथमा—वच्छ, एदं बालमिएन्दअं मुञ्च । अवरं दे कीलणअं दाइस्सं ।

वत्स, एतं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि ।

---

ऋषिभिः सर्वदमन इति कृतनामधेयोऽसि । **किं नु खल्विति** ॥ औरसे धर्मपत्नीजे पुत्र इव मनः स्निह्यति स्निग्धं भवति । एषा खलु केसरिणी त्वां लङ्घयति यद्यस्याः पुत्रं न मुञ्चसि । अहो बलवत्खलु भीतोऽस्मि । अधरं दर्शयति । अत्राधरदर्शनमनादरे । अत्र दर्शितोऽयमधरो विसृष्टसंज्ञः । यथोक्तं वसन्तराजीये—'विवर्तितो विकासी च विसृष्टश्च निगूहितः । आयतो रोचितो वृत्तः संदष्टश्च समुद्गकः ॥ कम्पितश्चेति नाट्यज्ञैरधरो दशधा मतः । तत्र—प्रसारितो विसृष्टाख्योऽनादरे दर्शितार्पणः ।' इति । **महत इति** ॥ महतः तेजसः । तेजश्शब्देन तेजस्वी लक्ष्यते । तथा रघुवंशे—तेजसां हि न वयः समीक्ष्यते इति । बीजं बीजोत्पन्नः पुत्र इत्यर्थः । अत्र लक्षणा । तत्रोपमामाह—स्फुलिङ्गावस्थया स्थितः सन् एधांसि इन्धनानि अपेक्षत इति स तथोक्तः । 'कर्मण्यण्' इत्यण् । वह्निरिव एधोपेक्ष इति कथनेन

**बालः**—कहिं । देहि णं । कुत्र । देह्येनम् । [इति हस्तं प्रसारयति ।

**राजा**—(बालस्य हस्तमवलोक्य) कथं चक्रवर्तिलक्षणमप्यनेन धार्यते ।

तथा ह्यस्य—

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

**द्वितीया**—सुव्वदे, ण सक्को एसो वाआमेत्तेण विरमयिदुं । गच्छ । ममकेरए उडए मक्कण्डेअस्स इसिकुमारअस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि । तं से उवहर ।

सुव्रते, न शक्य एष वाङ्मात्रेण विरमयितुम् । गच्छ । मदीये उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति । तमस्मै उपहर ।

**प्रथमा**—तह । तथा । [इति निष्क्रान्ता ।

**बालः**—इमिणा एव्व दाव कीलिस्सं । अनेनैव तावत्क्रीडिष्यामि ।

[इति तापसीं विलोक्य हसति ।

---

अस्य बालस्य शक्त्यतिशयो गम्यते । वत्स मुञ्चैतं बालमृगेन्द्रम् । अपरं ते क्रीडनकं दास्यामि । देह्येनम् । **प्रलोभ्येति** ॥ प्रलोभयितुं योग्यं प्रलोभ्यं रमणीयं वस्तु द्रव्यं तस्मिन् प्रणयेन प्रसारितः करः । जालेषु अन्तरेषु ग्रथिताः संनद्धाः संहता अङ्गुलयो यस्य स तथोक्तः । भाति राजते । अत्रोपमामाह—इद्धरागया नवोषसा नवम् उषो यस्याः सा प्रातः-संध्या तया । भिन्नं विकसितं सत् । अलक्ष्यपत्रान्तरम् अदृश्यपत्रविवरम् । सुव्रते न शक्य एष वाङ्मात्रेण विरमयितुम् । गच्छ । मदीये उटजे मार्कण्डस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति । तमस्मै

**राजा**—स्पृहयामि खलु दुर्ललितायास्मै ।

**आलक्ष्यदन्तमुकुलाननिमित्तहासै-**
**रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।**
**अङ्काश्रयप्रणयिनस्तनयान्वहन्तो**
**धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥**

**तापसी**—होदु । ण मं अअं गणेदि । (पार्श्वमवलोकयति) को एत्थ दाव इसिकुमाराणं । (राजानमवलोक्य) भद्दमुह, एहि । मोएहि दाव इमिणा दुम्मोअहत्थग्गहेण डिम्भलीलाए बाहीअमाणं बालमिएन्दअं ।

भवतु । न मामयं गणयति । (पार्श्वमवलोकयति) कोऽत्र ऋषिकुमाराणाम् । (राजानमवलोक्य) भद्रमुख, एहि । मोचय तावदनेन दुर्मोचहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

**राजा**—(उपगम्य सस्मितं) अयि भो महर्षिपुत्र ।

**एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मनस्त्वया ।**
**सत्त्वसंश्रयसुखोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः ॥**

---

उपहर । अनेनैव तावत् क्रीडयिष्यामि । दुर्ललिताय धूर्ताय अस्मै बालाय स्पृहयामि ईप्से । 'स्पृहेरीप्सितः' इति संप्रदानसंज्ञा । **आलक्ष्येति** ॥ स्पष्टः । भवतु । न पुनरेष मां गणयति । कोऽत्र ऋषिकुमाराणाम् । निर्धारणे षष्ठी । भद्रमुख एहि मोचय तावदनेन दुर्मोचहस्तग्राहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् । भद्रमुखेति सामान्यस्यामन्त्रणे । यथोक्तं—'हूतौ भद्रमुखेत्येवं मते राज्ञि सुतेऽथवा' इति । **एवमाश्रमेति** । एवमित्थं आश्रमविरुद्धं यथा भवति तथा वर्तत इति स तथोक्तस्तेन । त्वया जन्मनो हेतोः ४ सत्त्वस्य संश्रयणमाश्रयणं स एव गुणो धर्मो यस्य स तथोक्तः । संयमः किं

**तापसी**—भद्दमुह, ण खु अअं इसिकुमारओ ।

भद्रमुख, न खल्वयं ऋषिकुमारः ।

**राजा**—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । (यथाभ्यर्थितमनुतिष्ठन् बालस्पर्शमुपलभ्य, आत्मगतं)

> अनेन कस्यापि कुलाङ्कुरेण
> स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
> कां निर्वृतिं चेतसि तस्य कुर्या-
> द्यस्यायमङ्गात्कृतिनः प्ररूढः ॥ १९ ॥

**तापसी**—(उभौ निर्वर्ण्य) अच्छरिअं अच्छरिअं । आश्चर्यमाश्चर्यम् ।

**राजा**—आर्ये, किमिव ।

**तापसी**—इमस्स बालअस्स दे वि संबंधसंवादिणी आकिदि त्ति विह्मिदम्हि । अपरिइदस्स वि दे अप्पडिलोमो संवुत्तो त्ति ।

अस्य बालस्य तेऽपि संबन्धसंवादिन्याकृतिरिति विस्मितास्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति ।

**राजा**—(बालकमुपलालयन्) न चेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ।

**तापसी**—पुरुवंसो । पुरुवंशः ।

**राजा**—(आत्मगतं) कथमेकान्वयो मम । अतः खलु मदनुकारिण-

---

किमर्थं दूष्यते दुष्टः क्रियते । अत्रोपमानमाह—कृष्णसर्पशिशुना चन्दन इव । भद्रमुख न खल्वयमृषिकुमारः । **अनेनेति** ॥ स्पष्टः । आश्चर्यम् । अस्य बालस्य तवापि संबन्धसंवादिनी आकृतिरिति विस्मितास्मि । अपरिचितस्याप्यप्रतिलोमः संवृत्त इति च । **आर्ये इति** ॥ व्यपदेशः कुलम् । अत्र कुमारवंशज्ञानरूपस्य कार्यस्याक्षेपणात् विरोधो नाम संध्यङ्गमुक्तम् । 'कार्यान्वेषो

मेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकपतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

(प्रकाशं) न पुनरात्मगत्या मानुषाणामेष विषयः ।

**तापसी**—जइ भद्दमुहो भणादि अच्छरासंबन्धेण इमस्स बाळस्स जणणी एत्थ देवगुरुणो तवोवणे पसूदा ।

यथा भद्रमुखो भणत्यप्सरःसंबन्धेनास्य बालस्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।

**राजा**—(आत्मगतं) हन्त, द्वितीयमिदमाशाजननम् । (प्रकाशं) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

**तापसी**—को तस्स धम्मदारपरिच्चाइणो णाम संकित्तइस्सदि ।

कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयिष्यति ।

**राजा**—(स्वगतं) इयं खलु कथा मामेव लक्ष्यीकरोति । यदि ताव-

---

विरोधः स्यात्' इति । पुरुवंशस्य एषः । **भवनेष्विति** ॥ सुधासितेषु भवनेषु सौधेषु प्रथमं पूर्वं ये पौरवाः क्षितिरक्षार्थं लोकरक्षणाय निवासं स्थितिम् उशन्ति वाञ्छन्ति । तेषां पश्चात् नियतैकपतिव्रतानि नियताः एकाः केवलाः पतिव्रताः सहधर्मचारिण्यो येषु तानि तरुमूलानि गृहीभवन्ति निवासीभवन्ति । यथा भद्रमुखो भणति । अप्सरःसंबन्धेन अस्य बालस्य जननी अत्र देवगुरोस्तपोवने प्रसूता । अत्र जिज्ञासितस्य कार्यस्य निबन्धनात् ग्रथनं नाम संध्यङ्गमुक्तम् । 'ग्रथनं संनिबन्धनम्' इति । कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयिष्यति । इयमपि सा कथा मामेव लक्ष्यीकरोतीत्यनेन पूर्वज्ञातार्थकथनान्निर्णयो नाम संध्यङ्गमुक्तम् । 'अनुभूतार्थकथनं निर्णयः

दस्य शिशोर्मातरं नामतः पृच्छामि । अथवा न न्याय्यः परदारव्यवहारः ।

(प्रविश्य मृण्मयूरहस्ता)

**तापसी**—सव्वदमण, सउन्दलावण्णं पेक्ख ।

सर्वदमन, शकुन्तलावण्यं पश्य ।

**बालः**—(सदृष्टिक्षेपं) कहिं वा मे अज्जू । 　कुत्र वा मम माता ।

**उभे**—णामसारिस्सेण वञ्चिदो माउवच्छलो ।

नामसादृश्येन वञ्चितो मातृवत्सलः ।

**द्वितीया**—वच्छ, इमस्स मित्तिआमोरस्स रम्मत्तणं पेक्खत्ति भणिदो सि ।

वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

**राजा**—(आत्मगतं) किंवा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ।

**बालः**—अज्जुए, रोअदि मे एसो भद्दमोरो ।

मातः, रोचते म एष भद्रमयूरः । 　[इति क्रीडनकमादत्ते ।

**प्रथमा**—(विलोक्य सोद्वेगं) अम्हहे, रक्खाकरण्डअं से मणिबन्धे ण दीसदि ।

(विलोक्य सोद्वेगं) अहो, रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।

---

'परिकीर्तितः ।' इति । सर्वदमन, शकुन्तलावण्यं पश्य । कुत्र वा मे अम्बा । नामसादृश्येन वञ्चितो मातृवत्सलः । वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति फणितोऽसि । आर्ये, रोचते मे एष भद्रमयूरः । अहो रक्षाकरण्डकं रक्षाघुटिका, अस्य मणिबन्धे न दृश्यते ।

**राजा**—अलमलमावेगेन । नन्विदमस्य सिंहशावविमर्दात्परि-भ्रष्टम् । (इत्यादातुमिच्छति ।)

**उभे**—मा क्खु इदं आळम्बिअ । कहं गहीदं णेण ।

मा खल्विदमालम्ब्य । कथं गृहीतमनेन ।

(इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः ।)

**राजा**—किमर्थं प्रतिषिद्धाः स्मः ।

**प्रथमा**—सुणादु महाराओ । एसा अवराजिदा णाम ओसही इमस्स जादकम्मसमए भअवदा मारीएण दिण्णा । एदं किल मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हदि ।

शृणोतु महाराजः । एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति ।

**राजा**—अथ गृह्णाति ।

**प्रथमा**—तदो तं सप्पो भविअ दंसइ ।

ततस्तं सर्पो भूत्वा दशति ।

**राजा**—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

---

मा खलु इममालम्ब्य । कथं गृहीतमनेन । अहो इत्यादि परस्परमवलोकयत इत्यन्तेन अद्भुतार्थप्राप्तेः उपगूहनं नाम संध्यङ्गमुक्तम् ॥ 'अद्भुतार्थस्य संप्राप्तिरुपगूहनमुच्यते' इति । शृणोतु महाराजः । एषा अपराजिता नाम ओषधिः अस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरौ आत्मानं च वर्जयित्वा परो भूमिपतितां न गृह्णाति । अथ सर्पो भूत्वा दशति । किमर्थमित्यादिना सर्पो भूत्वा दशतीत्यन्तेन अयोग्यदुरापस्य प्रतिपादितत्वात् परिभाषा नाम संध्यङ्गमुक्तम् । 'परिभाषा

उभे—अणेअसो। अनेकशः।

राजा—(सहर्षं, आत्मगतं) कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि। (इति बालं परिष्वजते।)

द्वितीया—सुव्वदे, एहि। इमं वुत्तन्तं णिअमव्वावुदाए सउन्दलाए णिवेदेम्ह।

सुव्रते, एहि। इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः। [इति निष्क्रान्ते।

बालः—मुञ्च मं। जाव अज्जुएसआसं गच्छम्मि।

मुञ्च माम्। यावन्मातुः सकाशं गच्छामि।

राजा—पुत्रक, मया सहैव मातरमभिनन्दिष्यसि।

बालः—मम खु तादो दुस्सन्दो। ण तुमं।

मम खलु तातो दुष्यन्तः। न त्वम्।

राजा—(सस्मितं स्वगतं) एष विवाद एव प्रत्याययति।

(ततः प्रविशत्येकवेणीधरा शकुन्तला।)

शकुन्तला—विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसंसा आसि अत्तणो भाअहेएसु। अहवा जह साणुमदीए आचक्खिदं तह संभावीअदि एदं।

विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशंसासीदात्मनो भागधेयेषु। अथवा यथा सानुमत्याख्यातं तथा संभाव्यत एतत्।

---

मिथो जल्पः' इति। सुव्रते एहि। इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः। मुञ्च माम्। अम्बासकाशं गच्छामि। मम खलु तातो दुष्यन्तः। कस्त्वम्। पुत्रक मयेत्यादिना ततः प्रविशतीत्यन्तेन कार्यस्य दृष्टत्वात्पूर्वभावः। 'पूर्वभावः स विज्ञेयो यत्तु कार्योपदर्शनम्' इति।

**राजा**—(शकुन्तलां विलोक्य) अये, अत्रभवती शकुन्तला

**वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणी ।**
**अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं वहन्ती ॥२१॥**

**शकुन्तला**—(पश्चात्तापविवर्णं राजानं दृष्ट्वा) ण खु अज्जउत्तो विअ । तदो को एसो दाणिं किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ।

(पश्चात्तापविवर्णं राजानं दृष्ट्वा) न खल्वार्यपुत्र इव । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ।

**बालः**—(मातरमुपेत्य) अज्जुए, एसो कोवि परकेरओ मं पुत्त त्ति आलिङ्गदि ।

(मातरमुपेत्य) मातः, एष कोऽपि परकीयो मां पुत्र इत्यालिङ्गति ।

**राजा**—प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्, यदहमिदानीं त्वयाप्रत्यभिज्ञातमात्मानं पश्यामि ।

**शकुन्तला**—(आत्मगतं) हिअअ, समस्सस । परिच्चत्तमच्छरेण अणुकम्पिदं म्हि देव्वेण । अज्जउत्तो एव्व एसो ।

---

विकारकाले प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वापि न मे आशासासीदात्मनो भागधेयेषु । अथवा सानुमत्या यथाऽऽख्यातं तथा संभाव्यते । **वसने इति** ॥ स्पष्टः । न खल्वार्यपुत्र इव । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति । अम्ब, एष कोऽपि परकीयो मां पुत्र इत्यालिङ्गति । **प्रिय इति** ॥ त्वयि प्रयुक्तं कृतं मे क्रौर्यमपि प्रत्यादेशरौक्ष्यमपि अनुकूलपरिणामं अनुकूलपरिपाकं स्वन्तमित्यर्थः । संवृत्तं जातम् । अत्र हेतुमाह—यत् यस्मात्कारणात् । अहमिदानीम् अद्य त्वयात्मानं प्रत्यभिज्ञातं पश्यामि । पश्चात्तापकार्श्यवैवर्ण्यादिभिरयथाभूतोऽहं चिराद्विभाव्य ज्ञात इत्यनेन स्वापराधः प्रमृष्ट इति तया ज्ञातत्वादनुकूलपरिणामित्वं सिद्धमित्यभिप्रायः । हृदय समाश्वसिहि,

(आत्मगतं) हृदय, समाश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । आर्यपुत्र एवैषः ।

**राजा**—प्रिये,

**स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।**
**उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ २२ ॥**

**शकुन्तला**—जेदु अज्जउत्तो । जयत्वार्यपुत्रः ।

[इत्यर्धोक्ते बाष्पकण्ठी विरमति ।

**राजा**—सुन्दरि,

**बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।**
**यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३ ॥**

**बालः**—अज्जुए, को एसो । मातः, क एषः ।

**शकुन्तला**—वच्छ, दे भाअहेआइ पुच्छ ।

वत्स, ते भागधेयानि पृच्छ ।

**राजा**—(शकुन्तलायाः पादयोः प्रणिपत्य)

**सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते**
**किमपि मनसः संमोहो मे तदा बलवानभूत् ।**
**प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः**
**स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥**

---

परित्यक्तमत्सरेणैवानुकम्पितास्मि दैवेन । आर्यपुत्र एवैषः । **स्मृतीति** ॥ स्पष्टः । जयत्वार्यपुत्रः । **बाष्पेणेति** ॥ स्पष्टः । अम्ब को वा एषः । वत्स ते भागधेयानि पृच्छ । **सुतन्वित्यादि** ॥ प्रत्यादेशेन निराकरणेन कृतं व्यलीकं ते हृदयादपैतु निर्गच्छतु । तदा प्रत्यादेशकाले । प्रबलं तमः अज्ञानं येषां तेषाम् । प्रायः शुभेषु भद्रेषु एवंविधा वृत्तयो व्यापारा भवन्ति हि । अत्र दृष्टान्तमाह—

शकुन्तला—उट्ठेदु अज्जउत्तो । णूणं मम सुअरिदप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणामाहिमुहं आसी जेण साणुक्कोसो वि अज्जउत्तो मइ तहविहो संवुत्तो ।

उत्तिष्ठत्वार्यपुत्रः । नूनं मम सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि तथाविधः संवृत्तः ।

(राजा उत्तिष्ठति ।)

शकुन्तला—अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ।   अथ कथमार्यपुत्रेण स्मृतो दुःखभागी अयं जनः ।

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

**मोहान्मया सुतनु पूर्वमुपेक्षितस्ते**
**यो बद्धबिन्दुरधरं परिबाधमानः ।**
**तं तावदाकुटिलपक्ष्मविलग्नमद्य**
**बाष्पं प्रमृज्य विगतानुशयो भवामि ॥ २५ ॥**

[इति यथोक्तमनुतिष्ठति ।

---

अन्धः दृष्टिहीनः शिरसि क्षिप्तां स्रजं पुष्पमालिकां अहिशङ्कया सर्पभ्रान्त्या धुनोति निरस्यति । शकुन्तलायाः पादयोः पततीत्यादिना अहिशङ्कयेत्यन्तेन पर्युपासनस्य गम्यमानत्वात्प्रसादो नाम संध्यङ्गमुक्तम् । 'प्रसादः पर्युपासनम्' इति । उत्तिष्ठत्वार्यपुत्रः । नूनं मम सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीत् । येन सानुक्रोशोऽप्यार्यपुत्रो मयि तथाविधः संवृत्तः । अथ कथमार्यपुत्रेण स्मारितो दुःखभागी अयं जनः । **मोहान्मयेति** ॥ पूर्वमितः प्रत्यादेशादिति प्रसञ्जितप्रत्यादेशवेलायां उत्सन्नो यो बाष्प उपेक्षितः, आकुटिलपक्ष्म विलग्नं तं बाष्पं, अद्येदानीं प्रमृज्यापनीय विगतानुशयः अपगतपश्चात्तापो भवामि । उद्धृतविषादशल्य इत्यादिना यथोक्तमनुतिष्ठतीत्यन्तेन दुःखनिर्गमनस्य प्रतिपादनात्समयो नाम संध्यङ्गमुक्तम् । 'समयो

**शकुन्तला**—(नाममुद्रां दृष्ट्वा) अज्जउत्त, इदं तं अङ्गुलीअअं।

(नाममुद्रां दृष्ट्वा) आर्यपुत्र, इदं तदङ्गुलीयकम्।

**राजा**—अथ किम्। अस्मादङ्गुलीयोपलम्भात्खलु मया स्मृतिरुपलब्धा।

**शकुन्तला**—विसमं किदं णेण। जं तदा अज्जउत्तस्स पच्चाअणकाले दुल्लहं आसि।

विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत्।

**राजा**—तेन ह्यृतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम्।

**शकुन्तला**—ण मे एत्थ विस्सासो। अज्जउत्तो एव्व णं धारेदु।

न मेऽत्र विश्वासः। आर्यपुत्र एवैतद्धारयतु।

(ततः प्रविशति मातलिः।)

**मातलिः**—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते।

**राजा**—अभूत्संपादितस्वादुफलो मे मनोरथः। मातले, न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात्।

**मातलिः**—(सस्मितं) किमीश्वराणां परोक्षम्। एत्वायुष्मान्। भगवान्मारीचस्ते दर्शनं वितरति।

---

दुःखनिर्गम' इति। आर्यपुत्र, इदमङ्गुलीयकम्। अत्र काकुरनुसंधेया। विषमं कृतमनेन यत्तावदार्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत्। नास्त्यत्र मे विश्वासः। आर्यपुत्र एवैतद्धारयतु। दिष्ट्येत्यानन्दे निपातः। 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः। धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन च आयुष्मान् वर्धते एधते। अत्र पुत्रलाभरूपेण धर्मेण उपसृष्टस्य शकुन्तलालाभरूपस्य कार्यस्य प्रतीतिः कार्यं नाम पञ्चम्यर्थप्रकृतिरुक्ता भवति। 'कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च' इति। अत एवेष्टार्थसिद्धेर्गम्यमान-

राजा—शकुन्तले, अवलम्बस्व पुत्रम् । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

शकुन्तला—हिरिआमि अज्जउत्तेण सह गुरुसमीवं गन्तुं ।

जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् ।

राजा—अप्येवमाचरितव्यमभ्युदयकालेषु । एह्येहि ।

(सर्वे परिक्रामन्ति ।)

(ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः ।)

मारीचः—(राजानमवलोक्य) दाक्षायणि,

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ २६ ॥

अदितिः—संभावणीआणुभावा से आकिदी ।

संभावनीयानुभावास्याकृतिः ।

मातलिः—आयुष्मन्, एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः । तदुपसर्प ।

राजा—मातले,

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।

---

त्वादानन्दो नाम संध्यङ्गमुक्तम् । 'इष्टार्थसिद्धिरानन्द' इति । जिह्रेम्यार्यपुत्रेण सह गुरोः समीपं गन्तुम् । **पुत्रस्येति** ॥ स्पष्टः । संभावनीयानुभावा अस्याकृतिः । **आहुर्द्वादशधेति** ॥ मुनयः यद् द्वन्द्वं द्वादशधा स्थितस्य तेजसः सूर्यात्मकस्य कारणं हेतुं जनकमाहुः । यद् द्वन्द्वं यज्ञभागेश्वरं

यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥ २७ ॥

**मातलिः**—अथ किम् ।

**राजा**—(उपगम्य) उभाभ्यामपि वासवनियोज्यो दुष्यन्तः प्रणमति ।

**मारीचः**—वत्स, चिरं पृथिवीं पालय ।

**अदितिः**—वच्छ, अप्पडिरहो होहि । वत्स, अप्रतिरथो भव ।

**शकुन्तला**—दारअसहिदा वो पादवन्दणं करेमि ।

दारकसहिता वां पादवन्दनं करोमि ।

**मारीचः**—वत्से,

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीसदृशी भव ॥ २८ ॥

**अदितिः**—जादे, भत्तुणो बहुमदा होहि । अवस्सं दीहाऊ वच्छो उहअकुलणन्दणो होदु । उवविसह ।

जाते, भर्तुर्बहुमता भव । अवश्यं दीर्घायुर्वत्स उभयकुलनन्दनो भवतु । उपविशत । [सर्वे प्रजापतिमभित उपविशन्ति ।

---

यज्ञभागानामीश्वरं, भुवनत्रयस्य भर्तारं त्रिलोकनाथं देवेन्द्रमित्यर्थः । सुषुवे जनयामास । यस्मिन् द्वन्द्वे आत्मभुवः स्वयंभुवः ब्रह्मण इत्यर्थः । परः श्रेष्ठोऽपि पुरुषः विष्णुः भवाय जन्मने आस्पदं प्रतिष्ठां स्थितिं चक्रे । अनेन उपेन्द्रावतारस्य कारणत्वमुक्तम् । दक्षमरीचिसंभवं दक्षमरीचिभ्यां संभवम् उत्पन्नम् । दक्षाददितिः मरीचेः कश्यप इत्यनुसंधेयम् । अत एव स्रष्टुः ब्रह्मणः एकेन पुरुषेण अन्तरं व्यवधानं यस्य तत्तथोक्तम् । ब्रह्मणो मरीचिः मरीचेः काश्यपः, ब्रह्मणो दक्षः दक्षाददितिरिति रीत्या एकान्तरमनुसंधेयम् । तद्द्वन्द्वमिदम् । अत्र प्रश्ने काकुरनुसंधेया । अप्रतिहतो भव । दारकसहिता वः पादवन्दनं करोमि । **आखण्डलेत्यादि** ॥ स्पष्टः ॥

**मारीचः**—(एकैकं निर्दिशन्)

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं वः समागतम् ॥ २९ ॥

**राजा**—भगवन्, प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनम् । अपूर्वः खलु वोऽनुग्रहः । कुतः ।

उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु संपदः ॥३०॥

**मातलिः**—एवं विधातारः प्रसीदन्ति ।

**राजा**—भगवन्, इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढपूर्वां तद्दुहितरमवगतोऽहम् । तच्चित्रमिव मे प्रतिभाति ।

यथा गजो नेति समक्षरूपे तस्मिन्नतिक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत्प्रतीतिस्तथाविधो मे मनसो विकारः ॥३१॥

---

जाते, भर्तुर्बहुमता भव । अवश्यं दीर्घायुर्वत्सः उभयकुलनन्दनो भवतु । **उपविशेति** ॥ श्रद्धा आस्तिक्यबुद्धिः, वित्तं द्रव्यं, विधिरनुष्ठानं, वः समागतं संगमः । **उदेतीति** ॥ स्पष्टम् । **यथा गज इति** ॥ यथा यस्य कस्यचिन्मूढस्य समक्षरूपे प्रत्यक्षाकृतौ गजो न भवतीति प्रत्ययः स्यात् । तदनन्तरं तस्मिन् गजे अतिक्रामति अपयाते संशयः गजो वा न वेति संदेहः स्यात् । ततः पश्चादानीतस्य पदानि पादस्थानानि दृष्ट्वा गज एवायमिति सम्यग्ज्ञानं भवेत् । मे मनसो विकारः तथाविधस्तादृशः । पूर्वं विवादकाले किमिदमुपन्यस्तमित्यादिना शकुन्तलायाः परिग्रहाभावनिश्चयः । पश्चा-

**मारीचः**—वत्स, अलमात्मापचारशङ्कया । संमोहोऽपि त्वय्युपपन्नः । श्रूयताम् ।

**राजा**—अवहितोऽस्मि ।

**मारीचः**—यदैवाप्सरस्तीर्थावतरणात्प्रत्यादेशविक्लवां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि—दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति । स चायमङ्गुलीयकदर्शनावसानः ।

**राजा**—(सोच्छ्वासं) एष वचनीयान्मुक्तोऽस्मि ।

**शकुन्तला**—(स्वगतं) दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो । ण हु सत्तं अत्ताणं सुमरेमि । अहवा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो । अदो सहीहिं संदिट्ठम्हि भत्तुणो अङ्गुलीअअं दंसइदव्वं त्ति ।

(स्वगतं) दिष्ट्याकारणप्रत्यादेशी नार्यपुत्रः । न खलु शप्तमात्मानं स्मरामि । अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां संदिष्टास्मि भर्त्रेऽङ्गुलीयकं दर्शयितव्यमिति ।

**मारीचः**—वत्से, चरितार्थासि । सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य ।

**शापादसि प्रतिहता स्मृतिरोधरूक्षे**
**भर्तर्यपेततमसि प्रभुता तवैव ।**

---

तस्यां निर्गतायां 'कामं प्रत्यादिष्टाम्' इत्यादिना परिगृहीता न वेति संशयः । अनन्तरमङ्गुलीयकदर्शनादिना परिगृहीतेत्येवंरूपनिश्चय इत्यर्थः । दिष्ट्या अकारणप्रत्यादेशी आर्यपुत्रो न खलु । सत्यं, तदाहमात्मानं स्मरामि । अथवा प्राप्तो मया शापो विरहशून्यहृदयया । अतः सखीभ्यां संदिष्टास्मि—भर्त्रे अङ्गुलीयकं

छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥

राजा—यथाह भगवान् । अत्र खलु मे वंशप्रतिष्ठा ।

मारीचः—तथा भाविनमेनं चक्रवर्तिनमवगच्छतु भवान् । पश्य ।

रथेनानुत्खातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ३३ ॥

---

दर्शयितव्यमिति । शापात् भर्तरि पत्यौ स्मृतिरोधरूक्षे स्मृतेः स्मरणस्य रोधः प्रतिबन्धः तेन रूक्षे सति प्रत्याहता प्रत्यादिष्टासि । तस्मिन् उपेतमनसि प्रत्यामन्नमनस्के पश्चादङ्गुलीयकदर्शनेन प्राप्तस्मरणे सतीत्यर्थः । प्रभुता प्राभवं प्रधाननायिकात्वम् । तथैव पूर्ववदेव । अनेन परिग्रहबहुत्वेऽपीत्यादिना यदुक्तं तत्परामृश्यते । अत्र दृष्टान्तमाह—मलोपहतप्रसादे मलेन मालिन्येन उपहतः नष्टः प्रसादः प्रसन्नता यस्मिंस्तस्मिन् । दर्पणतले छाया प्रतिबिम्बं न मूर्च्छति न व्याप्नोति । तस्मिन् शुद्धे निर्मले सति पुनः सुलभावकाशा सुलभः सुखेन लभ्यः अवकाशः प्रवेशो यस्याः सा तथोक्ता । वत्से चरितार्थासीत्यादिना सुलभावकाशेत्यन्तेन लब्धस्यार्थस्य स्थिरीकरणात्कृतिर्नाम संध्यङ्गमुक्तम् । 'स्थिरीकरणमर्थस्य लब्धस्य कृतिरिष्यते' इति । भगवन् अत्र अस्यां शकुन्तलायां मे वंशप्रतिष्ठा । निर्वाहकत्वमेतत् कुलोद्धारकपुत्रोत्पादकत्वेनेत्यवगन्तव्यम् । एनं कुमारं तथा तेन प्रकारेण कुलोद्धारकत्वेनेत्यर्थः । भाविनं भविष्यन्तं चक्रवर्तिनं सार्वभौमं अवगच्छतु जानातु । **रथेनेति** ॥ निम्नोन्नतप्रदेशस्याभावोऽनुत्खातत्वं तेन स्तिमिता निष्कम्पा गतिः यस्य स तथोक्तस्तेन । अनेन विशेषणेन रथस्याकाशगामित्वं सूचितम् । पुरा जयति जेष्यति । 'यावत्पुरानिपातयोर्लट्' इति लट् । इह अस्मिन्नाश्रमे सत्त्वानां शरभसिंहादीनां प्रसभदमनात् बलात्कारेण मर्दनात् सर्वदमन इति संज्ञितः । जगतो लोकस्य भरणात् भरत इति पुनः पश्चात्

**राजा**—भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशंसामहे ।

**अदितिः**—भअवं, इमाए दुहिदुमणोरहसंपत्तीए कण्णो वि दाव सुदवित्थरो करीअदु । दुहिदुवच्छला मेणआ इह एव्व मं परिचरन्ती चिट्ठदि ।

भगवन्, अस्या दुहितृमनोरथसंपत्तेः कण्वोऽपि तावच्छ्रुतविस्तरः क्रियताम् । दुहितृवत्सला मेनकेहैव मां परिचरन्ती तिष्ठति ।

**शकुन्तला**—(आत्मगतं) मणोरहो क्खु मे भणिदो भअवदीए ।

(आत्मगतं) मनोरथः खलु मे भणितो भगवत्या ।

**मारीचः**—तपःप्रभावात्प्रत्यक्षं सर्वमेव तत्रभवतः ।

**राजा**—अतः खलु मामनभिक्रुद्धो मुनिः ।

**मारीचः**—तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः । कः कोऽत्र भोः ।

(प्रविश्य)

**शिष्यः**—भगवन्, अयमस्मि ।

**मारीचः**—गालव, इदानीमेव विहायसा गत्वा मद्वचनात्तत्रभवते कण्वाय प्रियमावेदय । यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

**शिष्यः**—यदाज्ञापयति भगवान् ।

[इति निष्क्रान्तः ।

---

आख्यां नामधेयं यास्यति । बिभर्तीति भरतः । भृमृदृशीत्यादिना औणादिकोऽतच् प्रत्ययः । तथाभाविनमित्यादिना लोकस्य भरणादित्यन्तेन बहुमानस्य गम्यमानत्वाद्भाषेति संध्यङ्गमुक्तम् । 'बहुमानादिसंप्राप्तिर्भाषेति परिकीर्तिता ।' इति । भगवन् अस्या दुहितुर्मनोरथसंपत्त्या कण्वोऽपि तावत् श्रुतविस्तरः क्रियताम् । दुहितृवत्सला मेनका इहैव मां परिचरन्ती तिष्ठति ।

**मारीचः**—वत्स, त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व ।

**राजा**—यदाज्ञापयति भगवान् ।

**मारीचः**—

**तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु**
**त्वमपि विततयज्ञः स्वर्गिणो भावयालम् ।**
**युगशतपरिवर्तानेवमन्योन्यकृत्यै-**
**र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ३४ ॥**

**राजा**—भगवन्, यथाशक्ति श्रेयसि प्रयतिष्ये ।

**मारीचः**—वत्स, किं ते भूयः प्रियमुपहरामि ।

**राजा**—अतः परमपि प्रियमस्ति यदिह भगवान्प्रसन्नः कर्तुमिच्छति । तथापीदमस्तु ।

---

मनोरथः खलु मे भगवत्या फणितः। वत्स त्वमपीत्यादिना यदाज्ञापयति भगवानित्यन्तेन सपुत्रशकुन्तलारूपफलप्राप्तेः प्रतीयमानत्वात्फलागमो नाम पञ्चम्यवस्थेत्यनुसंधेयम् । अत्राङ्के कार्यफलागमयोः समन्वयात् निर्वहणं नाम पञ्चमसंधिः प्रतिपादित इति मन्तव्यम् । **तव भवत्वित्यादि** ॥ प्रजास्विति विषयसप्तमी। त्वमपि विततयज्ञो विस्तृतयागः स्वर्गिणो देवान् अलंभावय मानय। एवम् अनेन प्रकारेण उभौ लोकौ मर्त्यस्वर्गौ तयोरनुग्रहः अभ्युपपत्तिः तेन श्लाघनीयैः क्रतुत्यैः अन्योन्यकृत्यैः परस्परव्यापारैः। युगानां शतानि तेषां परिवर्तान् परिवर्तनानि नयतं गमयतम् । भगवन् महात्मन् यथाशक्ति शक्त्यनुसारेण श्रेयसि धर्मे प्रयतिष्ये यत्नं करिष्यामि । अत्र वरणीयार्थलाभादुपसंहारो नाम संध्यङ्गमुक्तम् । वराप्तेरुपसंहार इति । किं ते भूयः प्रियं उपहरामि समर्पयामि । अतः परमपि अतोऽधिकमपि भगवान् प्रसन्नः कर्तुमिच्छति । अत्र प्रश्नार्थे काकुरनुसंधेया । तथापीदं

(भरतवाक्यम्) **प्रवर्ततां प्रकृतिहिताय पार्थिवः**
**सरस्वती श्रुतमहतां महीयताम् ।**
**ममापि च क्षपयतु नीललोहितः**
**पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५ ॥**

(इति निष्क्रान्ताः सर्वे ।)

**इति सप्तमोऽङ्कः ।**

इति महाकविश्रीकालिदासविरचितम्
**अभिज्ञानशाकुन्तलं** नाम
नाटकं संपूर्णम् ।

---

वक्ष्यमाणमस्तु भवतु । भरतवाक्यं भरतस्य नटस्य वाक्यं वचनम् । **प्रवर्ततामित्यादि ॥** पार्थिवः राजा । जातावेकवचनम् । प्रकृतिहिताय प्रजानां हिताय प्रवर्ततां प्रयतताम् । श्रुतैः शास्त्रैः महतां श्रेष्ठानाम् । 'श्रुतं शास्त्रावधृतयोः' इत्यमरः । सरस्वती महीयताम् । 'मह पूजायामि'त्ययं धातुः कण्ड्वादिषु पठ्यते । परिगता प्राप्ता शक्तिः पार्वती येन स तथोक्तः । अत एव नीललोहितः वामभागे नीलः दक्षिणभागे लोहितः । तथा चोक्तं—'अर्धमिन्द्रमणिमेचकमर्धं प्रकियां वहति विद्रुमराशेः । तावकं वपुरुमासख याभ्यां मातृमन्ति पितृमन्ति जगन्ति ॥' इति । आत्मभूः स्वयंभूः परमेश्वर इत्यर्थः । ममापि पुनर्भवं पुनर्जन्म क्षपयतु अपाकरोतु । अत्र भरतो नाट्यार्थस्य परिसमाप्तत्वात् अनुकार्यत्वमुत्सृज्याशिषं प्रयुक्तवानित्यनुसंधेयम् । अत्र शुभशंसनात् प्रशस्तिर्नाम संध्यङ्गमुक्तम् । 'प्रशस्तिः शुभशंसन'मिति । निष्क्रान्ताः सर्वे ॥

इति काटयवेमभूपविरचिते कुमारगिरिराजीये शाकुन्तलव्याख्याने सप्तमोऽङ्कः ॥

श्रीमत्काटयवेमस्य कृतिर्विज्ञानशालिनः ।
कुमारगिरिराजीयं जीयाद्विद्वद्विभूषणम् ॥

---

# ॥ श्लोकसूची ॥

# ABHIJÑĀNA ŚĀKUNTALA

## ACT THE FIRST.

MAY the Lord protect you, the Lord endowed with eight visible bodies, viz.,—the one that represents the first creation of the Creator (water), the one which transports the materials duly offered in the fire (fire), the one which represents the sacrificer (soul), the two which create time (the Sun and the Moon), the one which, being imbued with the quality capable of being sensed by the ear, stands pervading the Universe (ether), the one which wise men declare as the root-cause of all elements (earth) and the one by which living beings are animated by life (air). (1)

*(At the end of the Stage-benediction)*

*Stage-director*. *(Looking towards the dressing room)* Madam, if the dressing arrangements are finished, come here please.

*(Enter)*

*Actress.* Sir, here I am.

*Stage-director*. Madam, this assembly is full of learned people. To-day we have to present them with a new play whose plot is woven by Kālidāsa.

So let preparation be made for presenting every character.

*Actress.* Nothing will be found lacking, sir, as you are skilled in practice.

*Stage-director.* Madam, I shall tell you the truth.

I do not consider my skill in practice good enough until the learned are pleased. The mind of even those highly disciplined is diffident in itself. (2)

*Actress.* It is so. Sir, please order what is to be done next?

*Stage-director.* What else than to please the ears of this audience? Please sing about this very season of summer, so enjoyable, that has begun of late. For now—

The days are afoot in which a plunge into waters is delightful, which abound in sylvan breezes, fragrant through the contact of Pāṭali flowers, which easily induce sleep in thick-shaded spots and which are charming towards their close. (3)

*Actress.* Quite so. *(Sings)*

Gay womenfolk do with mercy deck their ears with Śirīṣa blossoms slightly kissed by bees and possessed of tender tips of filaments. (4)

*Stage-director.* Madam, well sung. Oh! The whole stage seems to be drawn in a picture, with hearts bound up by the melody. Hence now, which composition shall we take up for pleasing the audience?

*Actress.* Indeed the revered gentlemen have already commanded that the new play known as Abhijñāna Śākuntala should be put on boards.

*Stage-director.* Madam, I have been fully reminded. It was forgotten by me for the moment. For—

I was unwittingly captivated by the ravishing melody of your music like this king Duṣyanta by the fleet deer. (5)

*(Exeunt Both)*

PROLOGUE.

---

*(Enter* the King *in pursuit of a deer with bow and arrow in hand, driving on a chariot and* the Charioteer)

*Charioteer. (Looking at the king and the deer)* Long-lived one,

Casting my eye at the antelope and at you with the bow strung, I behold as it were, the Pinākabowed one in flesh and blood in pursuit of the deer. (6)

*King.* Charioteer, we have been drawn far off by this deer.

And even now, casting his glance ever and anon at the pursuing chariot with a graceful bend of his neck and mostly covering the forepart of his body by the hind part out of fear of the fall of arrows and strewing the track with half-cut pieces of

Darbha slipping from his mouth open through fatigue, behold, due to his lofty boundings he travels more in the sky and less on earth. (7)

How is it! Even as I pursue him I have to strain myself to see him.

*Charioteer.* Long-lived sir, since the ground is full of ups and downs I have held up the reins, and consequently the speed of the chariot has been slackened. Thereby this deer has gained in the intervening distance. Now when you come to the even ground he cannot elude your reach.

*King.* Then loosen the reins.

*Charioteer.* As Your Highness commands. *(Looking at the speed of the chariot)* Long-lived sir, behold, behold.

As the reins are let loose these horses elongating the foreparts of their bodies, keeping steady the edges of chowries, with ears steady and erect, run such that they could not be overtaken by the dust raised by themselves, as if in emulation of the deer's speed. (8)

*King.* True. The horses surpass the green horses of the Sun. Accordingly—

That which is tiny to the vision becomes suddenly big. That which has gaps in the middle appears to be joined together. That which is curved by nature appears to the eyes to be in a straight

line. Due to the speed of the car, nothing is either far from me or close to me even for an instant. (9)

Driver, look at this being killed. *(Gesticulates the application of an arrow to the bow-string)*

*(Behind the screen)*

Oh! O king, this is a deer of the hermitage should not be killed, should not be killed.

*Charioteer.* *(Listening and seeing)* Long-lived sir, sages have appeared, intercepting the antelope that lay within your arrow-shot.

*King.* *(Hastily)* Then let the horses be controlled.

*Charioteer.* Yes. *(Stops the chariot)*

*(Enter* a Hermit *along with* two others)

*Hermit.* *(Raising his hand)* King, this is a deer of the hermitage, should not be killed, should not be killed.

So withdraw your arrow that has been well applied to the string. Your weapon is for protecting the distressed, not for striking at an innocent one. (10)

*King.* Here it is withdrawn. *(Does so)*

*Hermit.* This befits you who are the torch of Puru's race.

This is quite befitting of you who are born of Puru's dynasty. May you get a son possessed of similar qualities, bound to become an emperor. (11)

*The two others.* *(Raising their hands)* By all means may you get a son bound to be an emperor.

*King.* *(With salutation)* Accepted.

*Hermit.* King, we have set out for gathering fuel. Here is seen the hermitage of Kulapati Kaṇva on the bank of the Mālinī. If there be no prejudice to your other work you may walk in and accept the hospitality due to guests. Besides,

On seeing the pleasant rites performed by sages free from impediments you will know how much your arm bearing the scars of the bowstring affords protection. (12)

*King.* Is Kulapati present?

*Hermit.* Just now after directing his daughter Śakuntalā to attend to the reception of guests he has gone to Somatīrtha to quell the influence of an adverse fate affecting her.

*King.* Be it so. I shall see her. On coming to know of my devotion she will report me to the sage.

*Hermit.* We shall take leave. *(Exit along with his pupils)*

*King.* Charioteer, urge the steeds on. Let us purify ourselves by the sight of the holy hermitage.

*Charioteer.* As Your Highness commands. *(Again observes the speed of the chariot)*

*King.* *(Looking around)* Charioteer, even without mention this can be known as the region of a penance-grove.

*Charioteer.* How?

*King.* Don't you see? For here—

